१८] प्रतिष्ठापयितुं राज्ये निहन्तुमपि वा पुनः ॥१८॥ [N
१९ उ] समन्वेष्यति सुग्रीवः सीतया सह राघवम् ।
शशाङ्कमिव रोहिण्या तं हत्वा रावणं रणे ॥१९॥ [१४
२०] यथा मयैव सुग्रीवो भार्यया रुमयैव च ।[2]
अचिरेणैव रामोऽयं सीतया राजयिष्यति ॥[3]२०॥ [N
२१ उ] यत् तु मे सौम्य विज्ञाप्यं शृणु तन्मे नरर्षभ ।
श्रूयते नरशार्दूल रावणस्य दुरात्मनः ॥२१॥ [N
२२] दश कोटिसहस्राणि लङ्कायां सन्ति राक्षसाः ।
अयुतानि च षट्त्रिंशत् सहस्राणि चतुर्दश ॥२२॥ [१५
२३] अहत्वा तान् दुराधर्षान् राक्षसान् कामरूपिणः ।
न शक्यो रावणो हन्तुं येन सा मैथिली हृता ॥२३॥ [१६
२४] नैव शक्यो(?क्या) रणे हन्तुमसहायेन सर्वथा ॥२४॥
२५पू] राक्षसाः क्रूरकर्माणः सुग्रीवेण विशेषतः । [१७
N] निहन्तव्याः सुबहवः सह वानरपुङ्गवैः ॥२५॥ [N
२५ उ] एतदाख्यातवान् वाली स ह्यभिज्ञो हरिः प्रभुः ।
२६पू] आगमस्तु न मे व्यक्तः श्रुत्वा चैतद् ब्रवीम्यहम् ॥२६॥ [१८
२७ उ] तत्सहायनिमित्तं वै प्रेषिता हरिपुङ्गवाः ।

---

१. रा—समवापि ।
२. म—
यथा मयैव सुग्रीवं समयोजद् रघूत्तमः ।
तथाऽकरिष्यत् सुग्रीवो रामं च सह मैथिलीम् ॥
३. रा छ, अ ब म छ, श म च—नास्ति ।
४. अ च—तांस्तु ।
५. अ च—दुर्धर्षान् ।
म—सुदुर्धर्षान् ।
म—‡ दुराधर्षान् ।
६. छ, —राक्षसो ।
७. कै रा छ, ब म छ, श—सर्वदा ।
८. श—† राक्षसान् ।
९. छ, —प्रभोः ।
१०. म छ, —आगमस्तु ।
११. कै—च तद् ।

आनेतुं प्रयतन् युद्धे वानरान् वारणोपमान् ॥२७॥ [१९
२८] तांश्च प्रतीक्षमाणोऽयं विक्रान्तान् सुमहाबलान् ।
राघवस्यार्थसिद्ध्यर्थं न निर्यातो हरीश्वरः ॥२८॥ [२०
२९] कृता तु संस्था सौमित्रे सुग्रीवेण यथा पुरा ।
अद्य तैर्वानरैः सर्वैरागन्तव्यं महाबलैः ॥२९॥ [२१
३०] ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च । [२२पू
कोटिशश्चोपयास्यन्ति पृथिव्यां ये चरन्ति वै ॥३०॥ [N
आसमुद्रात् परायुक्ताः सागरद्वीपवासिनः ।
३१] अद्य त्वामुपयास्यन्ति जहि कोपमरिन्दम ॥३१॥ [२२उ
तव वदनमिदं निरीक्ष्य रुष्टं
क्षतजनिभे नयने च भीमकोपे ।
हरिवरवनिता न यान्ति शान्ति
३२] प्रथमभयस्य विशङ्किताः स्म सर्वाः ॥३२॥ [२३

इत्यार्षे रामायणे किष्किन्धाकाण्डे तारावाक्यं नाम
अष्टाविंशः सर्गः ॥ २८ ॥

---

१. म—परवारणान् ।
२. कै रा ल$_1$ ब म ल$_2$— निर्यातोऽद्य ।
शा—निर्यातोऽद्य ।
३. म—कृत्वा ।
४. रा—तथा ।
५. रा अ म च- °न्तव्य० ।
६. कै—°वदनमिदं ।
म—हि मुखमिदं ।
७. म—निशम्य ।
८. म—[illegible]
९. रा अ म च—हि शङ्किताः ।
१०. ल$_2$—शान्ति ।
११. ल$_1$ ब म शा—विशङ्किता० ।
म—शान्ति ।

इत्युक्तः प्रश्रितं वाक्यं तारया धर्मसंहितम् ।
१] मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्-वचः ॥१॥ [१
तस्मिन् प्रतिगृहीते तु वाक्ये हरिगणेश्वरः ।
२] लक्ष्मणात् सुमहत्त्रासं क्लिष्टं वास्यमिवात्यजत् ॥२॥ [२
ततः कण्ठगतं माल्यं चित्रं बहुगुणं तदा ।
३] चिच्छेद विमदश्चासीत् सुग्रीवो वानरेश्वरः ॥३॥ [३
स लक्ष्मणं भीमरूपं सर्ववानरसम्मतः ।
४] अब्रवीत् सम्मतं वाक्यं सुग्रीवः प्रीतिवर्धनम् ॥४॥ [४
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ।
५] रामप्रसादात् सौमित्रे पुनः प्राप्तमिदं मया ॥५॥ [५
न शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्मणा ।
६] यादृशं तादृशं वाऽपि प्रतिकर्तुमहं पुनः ॥६॥ [६
सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् ।
७] सहायमात्रेण मया राघवः स्वेन तेजसा ॥७॥ [७
सहायकार्यं किं तस्य येन सप्त महाद्रुमाः ।
८] शैलाश्च वसुधा चैव बाणेनैकेन दारिताः ॥८॥ [८
धनुर्विस्फारयान (?ण-)स्य तस्य शब्देन लक्ष्मण ।
९] सशैला कम्पिता भूमिः सहायैस्तस्य किं भवेत् ॥९॥ [९

---

१. कै रा छ१ व मे छ२ घ— सुमहत्त्रासात् वस्त्रं भार्द्रमिव चोत्सृजत् ।
२. कै रा छ१ कै व म छ२ रा घ— विमदश्चासीत् ।
३. रा ब म घ— भीमबलं ।
४. छ१ व म— प्रनष्टा ।
५. म— ०राज्यमिदं मया ।
६. म— प्राप्तुं च शक्यते ।
७. छ१ व म— सर्वमहा० ।
छ२— सर्वे महा० ।
८. रा— ०स्फारमाणस्य ।

अनुयात्रां हि रामस्य करिष्येऽहं नरर्षभ ।
१०] गच्छतो रावणं हन्तुं वैरिणं सपुरःसरम् ॥१०॥ [१०
यदि किञ्चिद् व्यतिक्रान्तं विश्वासात् प्रणयेन वा ।
११] प्रेष्यस्य क्षमितव्यं मे[2] न कश्चिन्नापराध्यति ॥११॥ [११
इति सम्यग् ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
१२] अभवल्लक्ष्मणः प्रीतः प्रेम्णा चेदमुवाच ह ॥१२॥ [१२
धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः ।
१३] उपपन्नं च युक्तं च सुग्रीवस्य सुभाषितम् ॥१३॥ [१६
दोषज्ञः सति सामर्थ्ये कोऽन्यो भाषितुमर्हति ।
१४] वर्जयित्वा मम ज्येष्ठं भ्रातरं त्वां च वानर ॥१४॥ [१७
सदृशस्त्वं च रामस्य सत्त्वेनाभिजनेन च ।
१५] वयस्यो दैवतैर्दत्तश्चिराय हरिपुङ्गव ॥१५॥ [१८
सर्वथा तु मम भ्राता सनाथो रघुनन्दनः ।[10]
१६] त्वया नाथेन सुग्रीव प्रश्रितेन विशेषतः ॥१६॥ [१३
यस्ते स्वभावः सुग्रीव यच्च शौर्यमनुत्तमम् ।
१७] अर्होऽसि कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥१७॥ [१४

---

१. म—सपरस्परं ।
च—स्वपुरःसरं ।
२. कै ल$_2$—वे ।
३. कै ल$_1$ म—किञ्चिन्ना० ।
म—कश्चिन्नाप० ।
४. अ भ च—वस्य ।
५. ल$_2$—कृतार्थस्य ।
६. कै रा ल$_1$ व म ल$_2$ श भ च—दोषज्ञस्य च ।
७. कै रा ल$_1$ अ व म श—र्तं ।
ल$_2$ च—र्त्तं ।
८. म—]भातिभि० ।
९. ल$_2$—स ।
१०. म—नाथि ।
११. रा व म—श्रियो भोक्तुमर्हसि ।
ल$_1$ अ ल$_2$ श भ च—श्रियं भोक्तुमनुत्तमम्

सहायेन च सुग्रीव त्वया रामः प्रतापवान् ।
१८] हनिष्यति रणे शत्रुमचिरान्नात्र संशयः ॥१८॥ [१९
किन्तु शीघ्रतरं वीर निष्क्रम्य त्वं मया सह ।
१९] आश्वासय वयस्यं च भार्याहरणदुःखितम् ॥१९॥ [१९.
यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् ।
२०] मया त्वं परुषाण्युक्तस्तानि मे सोढुमर्हसि ॥२०॥ [२०
तमोवशगतानां हि क्षन्तव्यं स्वच्छचेतसा ।
N] अतो दुरुक्तं सुग्रीव सौहार्दात् क्षन्तुमर्हसि ॥२१॥ [N
महात्मनस्तस्य हि शोकविक्लवं
निशम्य वाक्यं मम मन्युरुद्धतः ।
ततो मया त्वं कुपितेन मार्दवं
२१] विसृज्य तीक्ष्णानि वचांसि भाषितः ॥२२॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे लक्ष्मणसुग्रीववाक्यं नाम
ऊनत्रिंशः सर्गः ॥ २९ ॥

---

१. कै ब—०च्छचेतसा ।
म—स्वेन चेतसा ।
२. ब—अहो ।
३. ङ,—नास्ति ।
४. ल ब म श—किष्किन्धा० ।
भ—नास्ति ।
५. ल ब म—लक्ष्मणवाक्यं ।
भ च—०सुग्रीवयो० ।

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
१] हनूमन्तं स्थितं पार्श्वे सचिवं वाक्यमब्रवीत् ॥१॥ [१
महेन्द्रे मलये सह्ये कैलासशिखरे तथा ।
२] मन्दरे पार्श्वगिरिषु पञ्चालेषु च संश्रितान् ॥२॥ [२
तरुणादित्यवर्णेषु भ्राजमानेषु सर्वशः ।
३] पर्वतेषु समुद्रेषु पश्चिमायां तथा दिशि ॥३॥ [३
आदित्यभवने चास्ते गिरौ चादित्यसन्निभाः ।
४] पद्मचन्दनसङ्काशाः संश्रिता हरिपुङ्गवाः ॥४॥ [४
अञ्जनाम्बुदसङ्काशाः कुञ्जरप्रतिमौजसः ।
५] अञ्जने पर्वते चैव वसन्ति हरियूथपाः ॥५॥ [५
हरितालगुहामध्या वानराः कनकप्रभाः ।
६] मेरुपार्श्वगताश्चैव ये च धूम्रगिरिश्रिताः ॥६॥ [६
मनःशिलाधातुगिरिं संश्रिता ये च मन्दरम् ।
७] बहवो वानराः शूराः सन्ध्याऽभ्रसमवर्चसः ॥७॥ [N
तरुणारुणवर्णाश्च पर्वते ये महारुचो[१४] ।
८] पिबन्ति मधु मैरेयं भीमवेगाः प्लवङ्गमाः ॥८॥ [७

---

१. ळ$_{2}$—नास्ति ।
२. म—महेन्द्रम० ।
३. म—†मन्दरे ।
४. कै रा ळ$_{1}$ व म ळ$_{2}$ रा—पाञ्चालेषु ।
५. ळ$_{1}$—संस्थितान् ।
६. रा म भ च—समुद्रान्ते ।
७. कै रा भ म च—षु वे ।
८. म—नास्ति ।
९. म—† ०रमतिमौजसा ।
१०. ळ$_{2}$—वै वसन्ति ।
११. म—‡मनश्शिलाधा० ।
१२. कै रा ळ$_{1}$ व म ळ$_{2}$—†समगिरिं ।
१३. रा ळ$_{1}$ व—‡महात्मने ।
१४. रा—भीमरूपाः ।

वनेषु सुविविक्तेषु सुगन्धिषु महत्सु च ।
९] तापसानां च पुण्येषु वनान्तेषु समन्ततः ॥९॥ [८
तान् समानय क्षिप्रं वै[1] पृथिव्यां सर्ववानरान् ।
१०] सामदानादिभिर् वाक्यैर[2]नुप्रेषय वानरान् ॥१०॥ [९
प्रेषिताः प्रथमं दूता महाकाया महाबलाः[3] ।
११] त्वरणार्थं तु भूयस्त्वं हरीन् संप्रेषयाशु च ॥११॥ [१०
ये[4] च प्रसक्ताः कामेषु दीर्घसूत्राश्च वानराः ।
१२] इहानयस्व तान् सर्वान् शीघ्रं त्वं मम शासनात् ॥१२॥ [११
अहोभिर्दशभिस्तूर्णं ये चागच्छन्ति न स्थिर ।
१३] हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥१३[5]॥ [१२
१४पू] शतान्यथ सहस्राणि कोट्यश्च मम शासनात् ।[6] [१३पू
N] हरीणामागमिष्यन्ति दूतसंप्रेषणादिह ॥१४॥ [N
मेघपर्वतसंकाशाश्छादयन्त इवाम्बरम् ।
१५] घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनाद् दिशः ॥१५॥ [१४
ते गतिज्ञा गतिं ज्ञात्वा पृथिव्यां सर्ववानराः ॥१६॥
१६] आनयन्तु हरीन् भीमान् हरयः शासनान्मम । [१५
तस्य वानरराजस्य श्रुत्वा वायुसुतस्तदा ।
१७] दिशं दिशं सुविक्रान्तान् प्रेषयामास वानरान् ॥१७॥ [१६
ते पदं विष्णुना क्रान्तं पतन्ति ज्योतिषां पथम् ।

---

१. अ छ₂—वै क्षिप्रं ।
२. अ—वाक्यैस्तु० ।
३. अ—महाजवाः ।
४. अ अ च₁—ये प्रसक्ताश्च ।
५. कै रा छ₁ अ अ-छ₂ रा—[illegible] ।
१२ क—१२ई [illegible]-
[illegible] ।
६. अ—०समाहितं ।
७. कै रा—०[illegible]ताः ।
अ—[illegible] ०[illegible] ।
अ—विष्णुपदमाक्रान्ताः ।
८. अ अ च₁—[illegible] । रा—[illegible] ।

१८] प्रयाताः प्रहिता राज्ञा हरयः सं क्षणेन ते ॥१८॥ [१७
तान् समुद्रेषु गिरिषु वनेषु च सरित्सु च ।
१९] वानरो वानरान् सर्वान् रामहेतोरनाययत् ॥१९॥ [१८
मृत्युकालसमस्याज्ञां कपिराजस्य वानराः ।
२०] श्रुत्वैव संप्रतस्थुस्ते सुग्रीवस्य भयात् ततः ॥२०॥ [१९
अस्तं गच्छति यत्रार्कः तस्मिन् गिरिवरे रताः ।
२२] तप्तहेमसमाभासस्तस्मात् कोट्यो दश च्युताः ॥२१॥ [२१
ततस्त्वञ्जनसङ्काशा गिरौ स[illegible] मनोजवाः ।
२१] तिस्रः कोट्यः प्लवङ्गानामागता यत्र राघवः ॥२२॥ [२०
कैलासशिखरेभ्यस्तु सिंहकेसर—वर्चसाम् ।
२४] सप्त कोटिशतान्येव वानराणामुपागमन् ॥२३॥ [२२
फलमूलरसंज्ञा ये हिमवन्तमुपाश्रिताः ।
२५] तेषां कोटिसहस्राणां सहस्रं समुपागतम् ॥२४॥ [२३
अङ्गारशिखराभाणां भीष्माणां भीमकर्मणाम् ।
२६] विन्ध्याद् वानरकोटीनां सहस्रं भुवि चोद्यतम्॥२५॥ [२४

---

१. रा ल$_1$, व म ल$_2$, श च म—ते ।
२. अ म च—॰तोरनोदयत् ।
व—॰तोरनामयत् ।
म—॰तोरनाययत् ।
३. ल$_1$—‡ संहतस्थुस्ते ।
४. कै रा ल$_1$, व म ल$_2$ श—नो सूर्ये ।
५. रा अ श म च—॰भासास्त॰ ।
६. ल$_1$ व म—कोटय(?)शतान्येवं ।
७. कै रा म च—† ॰मुपागतं ।
ल$_1$—† ॰मुपागताम् ।
८. कै रा व म—॰मूलकसंज्ञा ।
ल$_1$ कसंज्ञा । ल$_2$—‡ ॰संज्ञा ।
९. म—ते ।
१०. म च—॰पागमत् ।
म ल$_2$ श—नास्ति ।
११. म ल$_2$ श—नास्ति ।
म—॰भाणां ।
१२—अ म च—यम ।

क्षीरोदवेलानिलयास् तमालवनगन्धिनः[1] ।
२८] नारिकेलाशिनः[2] सौम्यास्तेषां संख्या न विद्यते ॥२६॥ [२५
वनेभ्यः सागरान्तेभ्यः सरिद्भ्यश्च वनौकसः ।
२९] वानरास् तूर्णमभ्येत्य[3] रुन्धन्तीव दिवाकरम् ॥२७॥ [२६
ये तु त्वरयितुं याता वानराः सर्ववानरान् ।
३०] ते[7] वीरा हिमवच्छैले ददृशुर् महदद्भुतम् ॥२८॥ [२७
तस्मिन् गिरिवरे रम्ये[9] यज्ञो माहेश्वरः पुरा[11] ।
३१] सर्वदेवतसन्तोषी बभौ विममनोहरः ॥२९॥ [२८
३२पू.] अन्नविष्यन्दजातानि मूलानि च फलानि च ।
अमृतस्वादकल्पानि ददृशुस्तत्र वानराः ॥३०॥ [२९
N] ततः सममवर्दं दिव्यं फलमूलं मनोहरम् ।
यः कश्चित् सकृदश्नाति मासं भवति निःक्षुधः ॥३१॥ [३०

---

१. क₂—॰कानिवतास् ।
२. म—॰व्यातग॰ ।
३. कै म च—नारिकेरा॰ ।
म—नारिकेरनाशनाः ।
४. म—पर्वतेभ्यश्च ।
५. म च—। वानरं पुनरभ्येत्य ।
म—वानराः पुनरभ्येत्य ।
६. रा क₁—]रंधतीव ।
७. क₂—
अत आरभ्य ३२तमश्लोकं यावत्पाठो नास्ति ।
८. कै रा क₁ च म क₂ शा—
॰च्छैलम् ।
९. म—रम्ये ।
१०. म—॰रस्सदा ।
म शा—॰रःस्मृतः ।
११. म—अतः परमधिकः पाठः—
गौरीपदानि वेदी च तपोवनमनुत्तमं ।
१२. म—अन्नविशं॰ ।
शा—अन्निष्यन्दभैजातानि ।
१३. च—]॰तस्वादकल्पानि ।
कै रा क₁ म च क₂ शा म च—
॰तस्वादुकल्पानि ।
१४. म—ददृशमभवद् ।
१५. कै रा च म शा—फलमूलमनो॰
म—फलमूलं मनोरमं ।
१६. म—सकृत्खाद ।
१७. म—समं भवति अक्लमः ।

N] तानि दिव्यानि मूलानि फलानि च फलाशिनः ।
१२ उ] औषधानि च दिव्यानि प्रगृह्य हरियूथपाः ॥१२॥ [११
तस्माद् भगवतो यज्ञात् कुसुमं च मनोहरम् ।
१३] आनिन्युर् वानरा गत्वा सुग्रीवहितकारिणः ॥१३॥ [१२
ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् ।
१४] सञ्चोदयित्वा त्वरिता जवेनाजग्मुरग्रतः ॥१४॥ [१३
ते तु तेन मुहूर्तेन वानराः शीघ्रविक्रमाः ।
१५] किष्किन्धां समनुप्राप्ताः सुग्रीवो यत्र वानरः ॥१५॥ [१४
ते गृहीत्वौषधीर् दिव्याः फलमूलं च वानरैः ।
१६] तं प्रतिग्राहयामासुर् वचनं चेदमब्रुवन् ॥१६॥ [१५
सर्वे परिश्रिताः शैलान् समुद्रांश्च वनानि च ।
१७] पृथिव्यां वानराः सर्वे शासनादुपयान्ति ते ॥१७॥ [१६
ततः प्रहर्षमगमत् सुग्रीवो वानरस्तदा ।

---

१. म—फलानि ।
२. ब—†च फलाशनः ।
म—फलभक्षिणः ।
३. श—नास्ति ।
४. कै रा ल१, ब म श—‡ओषधानि ।
५. म—०वानरप्रियकाम्यया ।
६. च—पृथिव्याः ।
७. ल२—नास्ति ।
२६ तम—३२ तमयोरवसानसान्य-न्वयः २७ तमादि—३२तमांतः पाठांशः ।
८. अ च—संचोदयित्वा ।
९. म—शीघ्रगामिनः ।
१०. ल१, ब म ल२ श—किष्किन्धां ।
११. म—नास्ति ।
१२. कै रा ल१, अ ब म ल२ श च—संप्रति० ।
१३. ल२—†० मब्रुवन् ।
१४. म—† परिप्लुताः ।
म—परिगताः ।
१५. ल१ अ ब—लोकाः ।
१६. अ म च—समुद्रांश्च ।
१७. म—ततः प्रहर्षोऽभूत्तस्य सुग्रीवस्य महात्मनः ।

१८] प्रतिजग्राह च[1] प्रीतस्तेषां सर्वमुपायनम् ॥३८॥[2] [१७

प्रतिगृह्य तु तत् सर्वमुपायनमनुत्तमम् ।

स१८,१ वानराणामुपागम्य[3] सान्त्वयित्वा[4] हरीश्वरः ॥३९॥ [१८

विसर्जयित्वा च[5] हरीन् शूरांस्तान् कृतकर्मणः ।[5] [१८पू

२] मेने कृतार्थमात्मानं[6] राघवं च महाबलम्[7] ॥४०॥ [१८।२उ

इत्यार्षे रामायणे किष्किन्धाकाण्डे[8] वानरोद्योगो[9] नाम

त्रिंशः सर्गः ॥ ३० ॥

---

१. ञ म—सुग्रीवस्ते० ।

२. म—एतावतैव सर्गोऽयं समाप्तो भवति। 'प्रतिगृह्य' इत्यादिश्लोकद्वयेन चोत्तरः सर्गः आरभ्यते ।

३. च—+ ०यित्वा च ।

४. च—तु ।

५. म—वानरान् सान्त्वयित्वा च विसृज्य कपीश्वरः । स विसृज्य ततः सर्वान् कपींस्तान् कृतकर्मणः ।

६. ल२—कृतार्थं ।

७. के रा ल१ ब—महाबलः ।

८. ब ल२—नास्ति । ल१ म रा—०णे किष्किन्धा० ।

९. ञ च—द्योगे । म—वानरसैन्यप्रेक्षो ।

६ब] अथ राजा स सिद्धार्थः सुग्रीवः प्लवगेश्वरः । [स.४०,१पू
रामं दिदृक्षुस् त्वरितं प्रस्थानं समरोचयत् ॥१॥ [N
७] समाहूय महाशूरान् सर्वांस्तान् हरियूथपान् ।
सुग्रीवो मन्त्रयामास लक्ष्मणेन च धीमता ॥[1]२॥ [N
८] हरिसैन्यमिदं प्राप्तमविघ्नेन समन्ततः ।
समागच्छन्ति चाद्यापि हरयो गिरिचारिणः ॥३॥ [N
९] अनुरक्ताश्च तुष्टाश्च हरियूथपयूथपाः ।
प्राप्ता ये चेह बलिनस्तान् न संख्यातुमुत्सहे ॥४॥ [N
१०] मुख्यैर्न कपिसैन्येन सर्वेण सहवानराः ।
माल्यवन्तं गिरिं गत्वा पश्यामो लक्ष्मणाग्रजम् ॥५॥ [N
११] प्रीतिमेष्यति सुव्यक्तं दृष्ट्वा च हरिवाहिनीम् ।
सर्वं युक्तं समालक्ष्य मन्युं त्यक्ष्यति मत्कृते ॥६॥ [N
१२] इति[10] मत्वा प्रयास्यामि स्वयमेव कृताञ्जलिः ।
लक्ष्मणं पुरतः कृत्वा प्रसादयितुमीश्वरम् ॥७॥ [N
१३] दह्यमानेन चार्येण प्रोणान् राज्यं तु मोहवे (?) ।
तारा मदत्ता दयिता हत्वा वालिनमाहवे ॥८॥ [N

---

१. म—अव्यवहितपूर्वसर्गान्तगतं श्लोकद्वयमादौ पठति । तु० ३०,३९–४०
२. म च—त्वरितः ।
३. श म—नास्ति ।
४. के रा ल, ब म श—+०गिरिचारिणः ।
५. रा—+सहा ।
६. रा म च—+ सुखेन ।
७. श—भरताग्रजं ।
८. म—दृष्ट्वा च राघव (वो?) ।
श—दृष्ट्वा च रामो मे ।
म—सुव्यक्तं च सैव ।
९. म म च—मां चोयुक्तं ।
१०. अ—अथवाहं गमिष्यामि ।
११. के रा म छ म [illegible] ।
१२. छ, ब म क, श—[illegible] ।

१४] पश्यामो वै हि काकुत्स्थं चरन्तमरिमर्दनम् ।
आज्वल्यमानं कोपेन दिधक्षुमिव पावकम् ॥१९॥ [N
१५] स दृष्ट्वा लक्ष्मणं मां च कृताञ्जलिपुटौ स्थितौ ।
प्रसादं यदि गच्छेत सैरिद् वै शारदीव हि ॥२०॥ [N
१६] तदा वीक्ष्याभयं दद्याद् यद् भवेद् गुणवत्तरम् ।
तत् संप्रधार्य मनसा समनुज्ञातुमर्हसि ॥२१॥ [N
१७] तस्य तद् वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
हेतुमद् ह्लादकं वाक्यं सुग्रीवमिदमब्रवीत् ॥२२॥ [N
१८] न लक्ष्मणो भिते[3] रामः सुग्रीवे प्रहरिष्यति ।
राघवः स परामर्षी धर्मात्मा धर्मवत्सलः ॥२३॥ [N
१९] धर्मज्ञयः सततं राजन् शरणागतसौहृदः ।
सुप्रसादोऽल्पदोषश्च कर्ता चैवार्थधर्मयोः ॥२४॥ [N
२०] एवं रामो महात्मा स महेन्द्रसदृशो गुणैः ।
न पापं विद्यते तस्मिंस्तस्माद् गच्छस्व मा चिरम् ॥२५॥ [N
२१] स लक्ष्मणं भीमबलं सर्ववानरसंमतः ।
अब्रवीद् प्रश्रितं वाक्यं सुग्रीवः संप्रहर्षयन् ॥२६॥ [१ पू
२२] किष्किन्धाया विनिष्क्रामन् तत्र लक्ष्मण रोचते । [१ उ
२१पू] एवं त्वामनुगच्छामि स्थेयं त्वच्छासने मया ॥"२७॥ [८

---

१. कै रा छ$_1$, ब म छ$_2$, शा म च—ज्वलन्तमिव ।
२. ब म च—सरितः ।
३. कै रा छ$_1$, ब म छ$_2$, शा—स्थिते ।
४. कै रा छ$_1$, भ ब म छ$_2$, शा च—[illegible] ।
५. कै रा छ$_1$, भ ब म छ$_2$, शा च—[illegible] स्थितौ ० ।
६. म शा—+०चैवोभयोः ।
७. भ—०त्मको ।
८. भ—सदृशसत्त्वो ।
च—महौजस० ।
९. रा भ म च—भीमबलः ।
१०. छ$_1$, ब म छ$_2$, शा—किष्किन्धायाः ।
११. छ$_1$—[illegible] । [illegible] ।
१२. म च—[illegible] ।

तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम् ।
२४] विसर्जयामास तदा तारां ताश्चैव योषितः ॥१८॥ [६
प्रविष्टायां तु तारायां तस्यामन्तःपुरं तदा ।
२५] केऽत्रेत्युवाच हरिपः सुग्रीवः सुमहाबलः ॥१९॥ [N
N] वानराश्चाब्रुवंस्तत्र इमे स्मो[3] वयमित्यथ । [N
तानुवाच स सुग्रीवः प्रांजलीन् समुपागतान् ।
२७] उपस्थापयत क्षिप्रं शिविकामिह वानराः ॥२०॥ [९
सुग्रीववचनं श्रुत्वा हरयो जातसंभ्रमाः ।
२८] उपानयन् महारम्यां शिविकां प्रियदर्शनाम् ॥२१॥ [१०
तामुपस्थापितां दृष्ट्वा शिविकां वानराधिपः ।
२९] लक्ष्मणारुह्यतां क्षिप्रमिति सौमित्रिमब्रवीत् ॥२२॥ [११
इत्युक्त्वा काञ्चनं यानं सुग्रीवः सूर्यसन्निभम् ।
३०] बृहद्भिर् हरिभिर् युक्तमारुरोह सलक्ष्मणः ॥२३॥ [१२
पाण्डुरेणातपत्रेण ध्रियमाणेन वल्गुना ।
३१] शुक्लैश्च बालव्यजनैर् धूयमानैस्ततस्ततः ॥२४॥ [१३
N] शंखभेरीनिनादैश्च वन्दिभिश्चाभिनन्दितः ।
निर्ययौ प्राप्य सुग्रीवो राजश्रियमनुत्तमाम् ॥२५॥ [१४
३२] स वानरशतैर् घोरैर् बलिभिः शस्त्रपाणिभिः ।
संवृतो निर्ययौ[7] तत्र यत्र रामो महाबलः ॥२६॥ [१५
N] सोऽभ्यगच्छत् तदा रामं दिव्याभरणभूषितः ।

---

१. म च—शुभलक्षणं ।
२. अ भ च—कोऽत्र० ।
३. कै रा ल$_1$, ब म ल$_2$ शा—स्म ।
४. रा—‡ उपस्थापयित ।
५. कै अ ब भ च—महारथं ।
६. म—ध्रियमाणेन ।
च—प्रेर्यमाणेन ।
७. अ च—संवृतोऽभिययौ ।
८. ल$_2$—०रणभूषितं ।

काञ्चनीं शिबिकां त्यक्त्वा पद्भ्यामेव प्लवंगमः ॥२७॥ [N
१८] स रामं शिरसा भूमौ प्रणम्य हरिपुंगवः ।
उपविश्याभ्यनुज्ञातः प्राञ्जलिर् वाक्यमब्रवीत् ॥२८॥ [N
४९] प्रनष्टौ श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ।
त्वत्प्रसादान्महाबाहो पुनः प्राप्तमिदं मया ॥२९॥ [२६पू
५०] नरदेवस्य भर्तुश्च मित्रस्य जयतां वर । [२६
कृते न प्रतिकुर्याद्यः पुरुषाणां स दूषकः ॥३०॥ [२७
५१] गता वानरमुख्या मे शतशः शत्रुकर्षण ।
प्राप्ताश्चादाय बलिनः पृथिव्याः सर्ववानरान् ॥३१॥ [२८
N] प्रकर्षेण च संप्राप्ता बलिनोऽतुलविक्रमाः ।
महाकायाः पृथिव्यां ये वानराः समुपागताः ॥३२॥ [N
५२] ऋक्षाश्चावहिता घोरा गोलांगूलाश्च राघव ।
कान्तारवनदुर्गाणामभितो भीमविक्रमाः ॥३३॥ [२९
५३] देवगन्धर्वपुत्राश्च वानराः कामरूपिणः ।
स्वैः स्वैः परिवृताः सैन्यैः पथि तिष्ठन्ति राघव ॥३४॥ [२९

---

१. ल, ब म—[illegible] ।
२. अ भ च—[illegible] देवस्य ।
३. कै रा ल२ अ ब म ल१ श च—॰वां च ।
४. कै रा ल, अ ब म ल१ श च—च ।
५. कै ल, श—दूषकः ।
रा—दूषणं । ल, ब म—मानमां ।
६. कै रा ल, ब म ल२ श—[illegible] राम मुख्या मे [illegible] ।
प्रकर्षेण च संप्राप्ता [illegible] ॥
च—आगता हरिमुख्या मे [illegible] स॰ ।
प्रकर्षेण संप्राप्ता [illegible] सर्वे वै [illegible] ।
७. च—पृथिव्यां [illegible] सर्वे च ।
अ—नास्ति ।
८. ल, ब—[illegible] ।
अ—[illegible] ।
म—[illegible] ।
म—[illegible] ।
९. अ भ च—॰दुर्गाणामभितः ।

५४] वृतैः शतसहस्रैश्च कोटिभिरयुतैरपि ।
५५पू] प्रयुतैरागमिष्यन्ति संकुलैर् हरियूथपाः ॥२५[3]॥ [३२
५६ उ] आगमिष्यन्ति ते राजन् महेन्द्रसमविक्रमाः ।
मेरुमन्दरसंकाशा विन्ध्यशैलकृतालयाः ॥२६॥ [३३
५७] ते त्वामभिगमिष्यन्ति रावणं ये[4] सहार्णवम् ।
५८ उ] निहत्य हरयः सीतामानयिष्यन्ति मैथिलीम् ॥२७॥ [३४

इत्यार्षे रामायणे किष्किन्धाकाण्डे सुग्रीववाक्यं नाम

एकत्रिंशः सर्गः ॥ ३१ ॥

---

१. म—कोटिभिः शतसाहस्रैः ।
२. म—संकुलैश्च परंतपाः ।
३. म—अतः परमधिकः पाठः—
[illegible] वानराः ।
[illegible] हरीणां हरियूथपाः ॥
४. कै रा छ१ च म घ—यातिनो हि वै ।
ल२—यातिनो हिवि । च—[illegible] ।
५. ल२—नास्ति ।
६. छ१ च म छ२ घ—किष्किन्धा० ।
म—उद्योगे ।

आगतांश्च प्रविष्टांश्च पृथिव्यां सर्ववानरान् ।[1]
१] दृष्ट्वा प्रहृष्टः सुग्रीवो राजा राघवमब्रवीत् ॥१॥[2]
N] आगताश्च निविष्टाश्च बलिनः कामरूपिणः ।
वानरेन्द्रा महाकाया ये मद्विषयवासिनः ॥२॥ [२
२] त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः । [३,पू
३पू] आगता वानराः शूरा दैत्यदानवसन्निभाः ॥३॥ [३,७उ
६उ] यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् ।
N] त्वत्सैन्यं मानवश्रेष्ठ निवेशयितुमर्हसि ॥४॥ [७उ
८उ] इति ब्रुवन्तं सुग्रीवं रामो दशरथात्मजः ।
९पू] बाहुभ्यां संपरिष्वज्य प्रीतो[8] वचनमब्रवीत् ॥५॥ [९
११ उ] नाहमस्मिन् प्रभुः कार्ये वानरेन्द्र सलक्ष्मणः ।
१२पू ] त्वमस्य हेतुः कार्यस्य त्वं गतिर्हि[9] मतो मम ॥६॥ [१२
सुहृद्विनीतो विक्रान्तः प्राज्ञः कर्मविशेषवित् ।
१३] भवानस्मद्धिते[11] युक्तः स्वकृतार्थोऽर्थविक्रमः ॥७॥ [१४

१. ङ$_2$ च—नास्ति ।
२. कै अ ङ$_1$ म श रा च—नास्ति ।
३. ङ$_1$—† विनिष्टाश्च ।
म—† विनष्टाश्च ।
४. रा—† तुत्सैन्यं ।
५. म—प्रीतिवचनं० ।
६. ङ$_2$म च—† हेतोः ।
७. कै अ ङ$_1$, ङ$_2$ च म श रा च—गतिर्हि ।
८. कै अ ल$_1$, ल$_2$ च म श रा च—भवतो ।
श—† भरतो ।
९. कै ल$_2$म श रा—‡सुहृन्निभीतो ।
भ ० वृद्धितीषो ।
१०. म—प्रज्ञः ।
११. कै ल$_1$, ल$_2$ च श रा—०द्धितयुतः ।
अ म च—०हितेयुतः ।
१२. अ म श—सुकृता० ।

९उ] ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा ।
स च देशो महाप्राज्ञ यस्मिन् वसति रावणः ॥८॥ [१०
१०] अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
११पू] प्राप्तकालं विधास्यामि तस्मिन् काले त्वया सह ॥९॥ [११
एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ।
१४] अब्रवील्लक्ष्मणस्याग्रे रामस्य वनगोचरः ॥१०॥ [१५
वृतः शतसहस्रेण वानराणामरिन्दम ।
१७] अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ॥११॥ [१७
तत्र सीतां तु वैदेहीं निलयं रावणस्य च ।
१८] मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च ॥१२॥ [१८
यमुनामापगां रम्यां यामुनं च महावनम् ।
१९] नदीं भागीरथीं चैव सरयूं कौशिकीं तथा ॥१३॥ [१९
मेकलप्रभवं शोणं नदं मणिनिभोदकम् । [२०पू
२०] कावेरीं रुचिरां चैव चन्दनामपि चापगाम् ॥१४॥ [N
नदीं कालमहीं चैव तमसां पुष्पवाहिनीम् ।
२४] गोमतीं गोकुलाकीर्णां तथा पूर्वां सरस्वतीम् ॥१५॥ [N

---

१. ल$_2$ ल$_1$ ब म श—तु ।
२. कै ल$_1$ ल$_2$ ब श रा—विमलं ।
३. श—अरिंदमः ।
४. अ च—दिशां ।
५. कै ल$_1$ ल$_2$ ब म श—नास्ति ।
६. ब—हरिवु० ।
७. म—†तमसा पुष्पवाहिनीं ।
८. कै—मेकलप्र० ।
९. म—नास्ति ।
१०. कै—‡ कावेरां ।
११. ल$_2$- चर्मणाम० ।
१२. म—† तमसा ।
१३. म—गोमतीमित्यादि श्लोकार्धः १४ श्लोकोत्तरार्धत्वेन पठितः । कावेरीमित्यारभ्य पुष्पवाहिनीमित्यन्तः श्लोकपाठश्च १५ श्लोकत्वेन पठितः ।

शीघ्रं वाप्य(?पी)स्तडागांश्च मगधानं काशिकोसलानं ।
२५] मलयांश्च विदेहांश्च पुण्ड्रान् वेङ्गांश्च मार्गत ॥१६॥ [२१पू
महानदं च लौहित्यं शैलं पट्टनशोभितम् ।
२६] पत्तनं कोशकाराणां तिमिवरजवाकुलम् ।[२१उ
२७पू] सर्वमेतद् विचेतव्यं मार्गमाणैस्ततस्ततः ॥१७॥
N] रामस्य पत्नीं वैदेहीं स्नुषां दशरथस्य च ।[२२
अवगाह्य समुद्रं च पर्वतान् पत्तनानि च ॥१८॥
२८] मन्दरस्य च ये कुक्षिं किराताः केचिदाश्रिताः ।[२३
२९पू] कर्णप्रावरणाश्चैव किराताश्चाष्टकर्णिकाः ॥''१९॥ [२४पू
'अक्षया बलवन्तश्च पुरुषाः पापकारिणः ।

---

१. कै अ ल$_1$, ल$_2$ ब म श रा च—
॰स्तडागाश्च ।
२. कै ल$_1$, ल$_2$ ब म श रा च—
३. कै ल$_1$, ल$_2$ ब म रा च—
काशिकोसलाः ।
श—काशिकोशलाः ।
४. ल$_1$, ल$_2$ रा—वंगाश्च ।
५. कै श च—† मार्गताम् ।
ल$_1$ ब—‡ सार्गताम् ।
म—†मार्गता । रा—‡सार्गजाम् ।
भ—† मार्गेच ।
ल$_2$—† मागधान् ।
६. कै ल$_1$—† तिमि—सुजवाकुला ।
अ—‡तिमिं परजताकुलं ।
ल$_2$—तिमिवचजवाकुलं ।
ब—†तिमि—तुजवाकुलं ।
म—‡तिमि—वजवाकुलं ।
श ‡तिमि—रावजवा॰ ।
रा—†तिमिवज्रजवा॰ ।
भ—‡तिमिंचरजताकरं ।
'तिमिनक्रजवाकुलं' इति मूलतः पाठःस्यात् ? ।
७. रा—विगंतव्यं ।
कै रा—†॰व्यं मार्गमाणस्त॰ ।
ल$_1$, ल$_2$ ब म श—†॰मार्गमाणास्त॰
८. अ च—† मंदारस्य ।
९. म श—॰दागताः ।
१०. म—कर्णप्रव॰ ।
११. अ भ—अतः परमधिकः पाठः—
बर्बराः काकमुखाः का(?चा-)मेनाश्च पायकाः ।

१०] किराता वनभूताश्च हेमाङ्गाः प्रियदर्शनाः ॥२०॥ [२५
आममीनाशिनश्चैव किराता द्वीपवासिनः ।
११] अन्तर्जलगता घोरा नरग्राहा इति श्रुताः ॥२१॥ [२६पू
एतेषामालयाः सर्वे विचेतव्याः समन्ततः ।
१२] गिरिभिर्यानि गम्यन्ते प्लवनेन प्लवेन च ॥२२॥
रत्नवन्तं जलद्वीपं सर्वरत्नोपशोभितम् ।
१३] सुवर्णकुट्टिमं चैव सुवर्णाकरमण्डितम् ॥२३॥ [२७
जम्बुद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ।
१४] दिवं स्पृशति शृङ्गैर्यो देवदानवसेवितः ॥२४॥ [२८
तत्र सर्वेषु शृङ्गेषु निर्झरेषु गुहासु च । [२९पू
१५] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥२५॥ [३१उ
तथा कालोदकं नाम समुद्रं भीमदर्शनम् ।
१६] आक्रीडं दानवेन्द्राणां गत्वा द्रक्ष्यथ वानराः ॥२६॥ [N
तत्र रक्षोगणा घोराश्छायां गृह्णन्त्यलक्षिताः ।
१७] ब्रह्मणा समनुज्ञाता नित्यकालं बुभुक्षिताः ।
N] ब्रह्मस्वहारिणः पापास्ते द्विजा नरकं गताः ॥२७॥ [N
तं कालमेघप्रतिमं महोरगनिषेवितम् ।
१८] अभिगम्य महानादं तथा नदनदीपतिम् ॥२८॥ [३६
ततो रक्तजलं घोरं लौहित्यं नाम सागरम् ।

---

१. म—†प्रेमांगाः ।
२. कै—†अंतजल० ।
३. म—प्लवमेन ।
४. ल₂—जयद्वीपं ।
५. कै—†सुवर्णकरमंडितं ।
६. म—शिशिरो ।
७. रा—अथ ।
८. कै अ ल₁ ल₂ ब म श रा—वानरेन्द्राणां ।
९. कै ल₁—नित्यं काळं ।
१०. श—रक्तजलकं ।
११. ल₂—†कौहित्ये ।
म—‡ काहित्यं ।
रा म—‡ कोहित्यं ।

३९] गता द्रक्ष्यथ वेत्सं च बृहतीं कूटशाल्मलीम् ॥२९॥ [३७
गृहं पतंगराजस्य सुपर्णस्य महात्मनः ।
४०] शुभ्रकैलाससंकाशं निर्मितं विश्वकर्मणा ॥३०॥ [३८
तस्य स्थानेषु रम्येषु विचेया जनकात्मजा ॥३१॥ [प्र
४१] ततः शृङ्गसहस्रेण भित्त्वा सलिलमुत्थितम् ।
द्रक्ष्यथाम्बुधरप्रख्यं गोशृङ्गं नाम पर्वतम् ॥३२॥ [प्र
४२] तत्र शृङ्गनिभा घोरा मंदेहा नाम राक्षसाः ।
शैलशृङ्गेषु लम्बन्ते नानारूपा महाबलाः ॥३३॥ [३९
४३] ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति ।
अभितप्ता महेन्द्रेण निशायामुत्पतन्ति च ॥३४॥ [४०
४४] ततः पांडुरमेघाभं क्षीरोदं नाम सागरम् ।
गता द्रक्ष्यथ दुर्धर्षं मुक्तामणिनिभोदकम् ॥३५॥ [४१
४५] तस्य मध्ये शुभो नाम जातो रजतपर्वतः ।
दिव्यगन्धैः कुसुमितै राजतैः कमलैश्चितैः ॥ ३६॥ [४२

---

१. ल१—गत्वा ।
२. अ भ च - तां चैव
श—वत्सां च ।
३. कै—शाल्मलिं ।
४. ल२ श—प्लवंगराजस्य ।
५. कै अ ल१ब भ श रा च—
पर्वतेषु स्थानेषु ।
भ—रम्येषु देशेषु ।
६. भ—०पांडुरम० ।
च—०पांडुरम०
७. अ भ श रा भ—संदेहा ।
८. कै अ ल२ श रा च—नानारूप-
बलाबलाः ।
कै—०बलान्विताः इति पाठान्तरं
केशान्तरम् ।
९. अ च - †तपन्ति ।
१०. भ—†क्षीरोदो नाम ।
११. ल२—नास्ति ।
१२. श—कलशैस्ततः ।
रा—‡कलशैश्चिता ।
कै अ ल१, ल२ च भ—
कलशैश्चिताः ।
१३. ल१—नास्ति ।

४६] तत्र सा राजतैः पद्मैर् नलिनी हेमकेसरैः ।
नाम्ना सुदर्शना नाम राजहंसैः समाकुला ॥३७॥ [४३
४७] किंनराश्च चारणा यक्षा गंधर्वाः पतगोरगाः ।
हृष्टाः समभिगच्छन्ति नलिनीं चारुदर्शनाम् ॥३८॥ [४४
४८] क्षीरोदं समतिक्रम्य तत्र द्रक्ष्यथ वानराः ।
घृतोदमुदधिश्रेष्ठं सर्वभूतनमस्कृतम् ॥३९॥ [४५
४९] तत्र कौर्कोटनं तेजः कृत्वा हयशिरा महत् । [४६पू
हविर्भूतं पयोधिं तं भ्राश्नात्यविरतं हविः ॥४०॥ [N
५०] तत्र विक्रोशतां नादो भूतानां सलिलौकसाम् ।
श्रूयते भृशमार्तानां कृष्यतां वडवामुखे ॥४१॥ [४७
५१] घृतोदस्योत्तरे कूले योजनानि चतुर्दश ।
जातरूपशिलो नाम जातः कनकपर्वतः ४२॥ [४८
५२] तस्यासीना नगस्याग्रे गता द्रक्ष्यथ वानराः । [४९उ
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥४३॥ [५०उ
५३] त्रिशिराः काञ्चनस्तालः केतुस्तस्य महात्मनः ।
भ्राजते पर्वतस्याग्रे वेदिकोच्छ्रायभूषितः ॥४४॥ [५१

---

१. श—संराजते ।
२. अ च—०केशरैः ।
३. ल$_2$—नास्ति ।
४. अ च—समाकुले: ।
५. म—ततो ।
६. अ च—०मुदधिं श्रेष्ठं ।
७. कै अ श रा म च—करकोटनं ते०
म—कर्कोटनतेजः ।
८. कै ल$_1$, ल$_2$ व म श रा—
प्राश्नमवि० ।
९. म—हतानां ।
१०. अ म च तस्यासीनं ।
ल$_1$, ल$_2$ व म—तत्रासीना ।
११. कै ल$_1$, ल$_2$ व म श रा म च—
वनस्याग्रे ।
१२. ल$_2$—†द्रक्ष्यति ।
१३. कै ल$_1$, ल$_2$ व म श रा म च—
वेदिका समभूषिता ।

५४] पूर्वस्यां दिशि निर्माणं द्रष्टव्य ब्रह्मनिर्मितम् । [५२
तत्र हेममयः श्रीमानुदयो नाम पर्वतः ॥४५॥
५५] तस्य कोटिर्दिवः(?दिव्य) स्तम्भा शतयोजनमायतो । [५३
जातरूपशिला दिव्या विराजति स वेदिका ॥४६॥
५६] सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ।
५७पू] जातरूपमयैर्दिव्यैः शोभिता सूर्यसन्निभैः ॥४७॥ [५४
तत्र योजनविस्तीर्णमायतं शतयोजनम् ।
५९] शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥४८॥ [५५
६० उ] तत्र वैखानसा नाम बालखिल्या मरीचिपाः ।
प्रादेशमात्रा दृश्यन्ते सूर्यकाले तपोधनाः ॥४९॥ [५८
६१] काञ्चनस्यैव शैलस्य सूर्यस्य च महात्मनः ।
आविष्टा तेजसा सन्ध्या पूर्वा रक्ता प्रकाशते ॥५०॥ [६१
६२] तत्र पूर्वं पदं कृत्वा तदा विष्णुस् त्रिविक्रमः ।
द्वितीयं[14] शिखरे मेरोश् चकार पुरुषोत्तमः ॥५१॥ [५६
६३] उत्तरेण परिक्रम्य जम्बुद्वीपं दिवाकरः ।

१. शा—नास्ति ।
२. शा—नास्ति ।
३. कै ल$_{2}$ शा—कोटिर्दिवस्तम्भा ।
ब म—०दिवः स्तम्भा ।
शा—नास्ति ।
म—कोटिशतं स्तम्भाः ।
४. म—०ममायताः ।
अ—+० ममायतं ।
५. कै ल$_{1}$,ल$_{2}$ ब म रा च—नास्ति ।
६. ल$_{1}$ ल$_{2}$ म शा—+ विद्धि ।
७ कै ल$_{1}$,ल$_{2}$ ब म शा रा—वैखानरा ।
८ अ म—+ बाल० ।
९. अ च—प्रदेशमात्रा ।
१०. ब—+ घूकस्य ।
११. अ—पूर्वं रक्ता ।
ल$_{1}$ म च—पूर्वरक्ता ।
१२. कै अ ल$_{1}$ ल$_{2}$ ब म शा रा—पूर्वपदं ।
१३. ल$_{1}$ ल$_{2}$ ब म शा—तत्र ।
१४. ल$_{1}$—द्वितीयाशिख० ।

रम्यो भवति भूतानां शिखरं तत् समाश्रितः ॥५२॥ [५७

६४] ततोऽस्य दर्शनोद्देव गोभिरेव प्रकाशते ।

६५पू ] ततस्तेजश्च सर्वत्र सर्वप्राणभृतामिह ॥५३॥ [५९

६६पू ] शैलेषु तेषु दिव्येषु काननोपवनेषु च ।

५८पू ] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥५४॥ [६०

ये च नोक्ता मया देशा विचेया तेषु जानकी । [६५ उ

N] मासे पूर्णे निवर्तध्वं गत्वा तमुदयं गिरिम् ।[1] [N

६९ उ] ऊर्ध्वं मासाच्च वस्तव्यं वसन् वध्यो भवेन्मम ॥५५॥ [६८ उ

एतावद् वानरैः सत्यं(?शक्य)मन्वेष्टुं रघुनन्दन ।

६८] आभास्करमामर्यादं नाभिजानाम्यतः परम् ॥५६॥ [६६

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।

७०पू ] पूर्णे मासे समुद्रार्था निवर्तध्वं प्लवंगमाः ॥५७॥ [६७

अतः परं प्रवक्ष्यामि गतिमन्यां महीतले ।

N] दक्षिणस्यां दिशि यथा गन्तव्यं प्लवंगाधिपैः ॥५८॥ [N

यथोक्तं चैव कर्तव्यमवश्यं प्रीतिमानहम् ।

N] अन्यथा संशयो वः स्याद् दाराणां जीवितस्य च ॥५९॥ [N

---

१. कै ल, ल२ ब म श रा च दर्शनादीनि ।

२. अ म—चक्षुश्च । च—नास्ति ।

३. च नास्ति ।

४. कै अ ल, ल२ ब म श रा च—नास्ति ।

५. च—०मन्वेष्टुं ।

ल२—०मन्वेष्टुं । म—[?]०मन्वेष्टुं ।

६. कै अ ल, ल२ ब म श रा च—आभास्करम० ।

म—अभास्करममर्यादं ।

७. ल१—तु ।

८. अ म च—प्लवगर्षभैः ।

महेन्द्रकान्तां वनषण्डमण्डितां
संचीर्य सर्वामपि गां च वानराः ।
नरेन्द्रपत्नीमधिगम्य मैथिलीं
७१] ततो निवृत्ताः सुखिनो भविष्यथ ॥६०॥ [६९

इत्यार्षे रामायणे किष्किन्धाकाण्डे पूर्वदिग्वर्णनं नाम
द्वात्रिंशः सर्गः ॥३२॥

---

१. ङ१ च म श—०कान्तावनषण्ड०।
२. ञ म च—विचीय सर्वां समगां।
३. ङ२—नास्ति।
४. च—रामायणे वाल्मीकीये।
५. ङ१ च म श—किष्किन्धाकाण्डे
ञ—उद्योगे।
६. श—नास्ति।

ततः प्रस्थाप्य सुग्रीवस्तं कपिं वानरेश्वरः ।
१] अपरान् प्रेषयामास वानरान् संप्रहर्षयन् ॥१॥ [१
२उ] पितामहसुतं वीरं जाम्बवन्तं महाकपिम् ।
नीलमग्निसुतं चैवं[2] हनूमन्तं च मारुतिम् ॥२॥ [२
३] सुहोत्रं च सुरार्चिं च शरगुल्मं तथैव च ।
गजं गवाक्षं शरभं सुषेणमृषभं तथा ॥३॥ [३
४] मैन्दं च द्विविदं[7] चैव विजयं गंधमादनम् ।
N] उल्कामुखमसंगं च वैश्वानरसुतावुभौ ॥४॥ [४
५उ] अंगदप्रमुखान् वीरान् कपीन् कपिवरेश्वरः ।
वेगविक्रमसंपन्नान् संदिदेश कपीश्वरः ॥५॥ [५
६] तेषामनुगणं चैव ददौ बलमनेकशः ।
७पू] विचार्य हरिवीराणामादिशद् दक्षिणां दिशम् ॥६॥ [६
ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः ।[10]
९] कपीशः कपिमुख्यानां स तेषां समुदाहरत् ॥७॥ [७
[12]एतैः सर्हे महाभागैर् वानरैः कामरूपिभिः ।
८] अभिगम्य महाभागा विशाल्यां दक्षिणां दिशम् ॥८॥ [N

---

१. म च—वानरर्षभः ।
२. ल$_{2}$—नास्ति ।
३. कै ल$_{1}$, ल$_{2}$ ब म श रा—मारुतं ।
४. म—सुहोत्रं ।
५. कै ल$_{1}$ ध रा म च—सरभं ।
ब म—‡ सुरभं ।
६. कै—‡ सुषेण० ।
७. कै ल$_{1}$, ल$_{2}$ ब म रा—द्विविधं ।
८. कै—उल्का ( पाठस्त्रुटितः )
९. कै—अंगदप्रमुखा……वरेश्वरः ।
( पाठस्त्रुटितः )
१०. म—ये केचिद्धन उद्देशास्तान्सर्वान्
परिमार्गथ ।
११. ब म च—समुदाहरन् ।
म—चानुदाहरत् ।
१२. म—एतैस्तु स ।

बुद्धि-विक्रम-संयुक्तै रुपायैरनुगच्छथ ।
N] ततः सीतां च मार्गध्वं निलयं रावणस्य च ॥९॥ [N
सहस्रशिखरं विन्ध्यं नानाद्रुमलताऽऽवृतम् ।
१०] नर्मदां च नदीं रम्यां महोरगनिषेविताम् ॥१०॥[८] [८
१४पू] मेकलामुत्कलां (?) चैव नदं मणिनिभोदकम् ।
N] जम्बूमतीं चन्द्रवतीं सर्वमेव विचीयताम् ॥११॥ [१०
१६ उ] विदर्भान् ऋषिकांश्चैव रम्यान् माहिषकानपि । [११पू
पर्वतप्रभवां तां तु श्लक्ष्णस्रोतस्तरङ्गिणीम् ।[११] [N
११] नानापक्षियुतां दिव्यां पुण्यां वेगवतीं नदीम् ॥१२॥[१२]
तत्र पर्वतपादेषु गिरीणां[१३] शिखरेषु च । [N
१२] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥[१४] १३॥ [N

---

१. अ भ—तत्र ।
२. च—नास्ति ।
३. ल$_1$ व म थ—०शिरसं ।
४. भ—अतः परमधिकः पाठः—
तां च वेगवतीं रम्यां कृष्णवर्णां महानदीम् ।
वरदां च महाकालां महानागनिषेविताम् ॥
च—नास्ति ।
५. ल$_1$ ल$_2$—मेकलामुकलं ।
व म—मेकलानूकलं ।
कै अ श च—मेकलामुकलां ।
६. कै अ ल$_1$ व म श रा भ च—
‡ चन्द्रमतीं ।
७. कै ल$_1$ ल$_2$ व म श रा—
† विचीयताम् ।
८. कै अ ल$_2$ व म रा भ च—
‡ विदर्भाम् ।
९. कै अ ल$_1$ व म रा भ च—
‡ ऋषिकांश्चैव ।
श—‡ मुषिकांश्चैव ।
१०. कै ल$_1$ ल$_2$ व म थ रा भ च—
† पर्वतप्रभवांस्तांस्तु ।
११. भ—नास्ति ।
१२. अ रा भ च—
अतः परमधिकः पाठः—
मार्गध्वं हरिशार्दूला तथा वेत्रवतीं नदीं ।
१३. भ—तस्य ।
१४. च—नास्ति ।

१७पू ] तथा शकान् कुणिन्दांश्च कलिङ्गांश्च विशेषतः ।
N] दर्शार्णान् कौकुरांश्चैव हैमानपि च कंदरान् ॥१६॥ [N
१७ उ] अन्वेष्यं दंडकारण्यं सशैलवनकाननम् ।
१८पू ] नदीं गोदावरीं चैव प्रसन्नसलिलां शुभाम् ॥१५॥ [१२पू
N] गता द्रक्ष्यथ कावेरीं हृतामप्सरसां गणैः । [N
१८ उ] तथैव चौण्ड्रान् पुण्ड्रांश्च केरलांश्च कुरूनपि ॥१६॥ [१२ उ
१९ उ] गंतव्यो मलयः श्रीमान् पर्वतो धातुमण्डितः ।
१९ उ] सचित्रैशिखरैश्चैव चित्रपुष्पितकाननः ॥१७॥ [१३
सचन्दनवनोद्देशो मार्गितव्यो महागिरिः ॥१८॥ [१४
२०] ततस्तामापगां दिव्यां प्रसन्नसलिलां शुभाम् ।
गता द्रक्ष्यथ कावेरीं हृतामप्सरसां गणैः ॥१९॥ [१५

---

१. अ—† शका ।
२. च—कुणिम्रांश्च । म—कुणिन्द्रांश्च ।
३. ल₂ रा—कुलिंदांश्च ।
४. च—नास्ति ।
५. अ रा—कुरांश्चैव ।
कै अ ल₁,ल₂ व म ध रा च—कुकुरांश्चैव ।
६. कै—हे म् ।
७. कै—कं न् ।
८. अ म - सशैलवनपादपं ।
९. ल₁—† ०सलिला ।
१०. च—कृतामप्सर० ।
११. कै—दौण्ड्रान् ।
ल₂ व म—चौड्रान् ।
ल₁ —चोड्रान् ।
१२. व म—पौंड्रांश्च रा—पुंड्रांश्च ।
भ च—पुंड्रांश्च ।
१३. कै—अन्यपातः ।
'तैलंगानन्ध्रानपि' इत्यपरहस्तेन पूरितम् ।
१४, ल₁—०शिखरैश्चैव ।
१५. कै सचंदन ⋯ ( पाठस्त्रुटितः )
'कंदरान्' इत्यपरहस्तेन पूरितम् ।
१६. कै ल₁ व म ध—मार्गितव्यस्ततस्ततः ।
१७. अ ल₁ ध अ च—
अतः परमधिकः पाठः—
तत्र चंदनखंडेषु (ल₁ चंडे) वनराजीषु वा रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥
१८. कै अ भ—रम्यां ।
१९. व म—‡ कावेरीं ।
२०. कै ल₂ म—† ०मप्सरसो ।
२१. ल₁—नास्ति ।

२१] तत्रासीनं नगस्याग्रे तपस्यन्तं महौजसम् ।
२२पू] द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् ॥२०॥ [१६
तमतिक्रम्य शैलेन्द्रं दिव्यधातुसमन्वितम् ।
N] पुलस्त्यमृषिमासाद्य गत्वा द्रक्ष्यथ वानराः ॥२१॥ [N
N] गंधर्वकन्या निहिता यत्र हित्वा सखीजनम् । [N
२२उ] ततस्तयाऽभ्यनुज्ञाताः प्रसन्नेनान्तरात्मना ॥२२॥
तां महाग्राहदुस्तारां तरिष्यथ महानदीम् । [१७
२३] सचंदनवनैर् दिव्यैः प्रसन्नद्वीपमालिनीम् ॥२३॥
कान्तं तं कृतसंकेतां समुद्रमभिगच्छतीम् । [१८
२४] ततो हेममयं दिव्यं मुक्तामणिविभूषितम् ॥२४॥
युक्तं कपाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः । [१९
२५] तामतिक्रम्य कौबेरीमाहृत्य मलयं गिरिम् ॥२५॥ [N
N] पौर्णीं मालामिव कृतां वेलां द्रक्ष्यथ वानराः । [N
पौर्णीं च मालां दिव्यां तु वितन्वन्तु वनौकसः ।[12]
२७] तत्र केतकिषण्डेषु[14] पुष्पितेषु वनेषु च ॥२६॥ [N

---

१. क२—[illegible] ।
कै म ल१ ध म श रा च—
[illegible]० ।
२. अ म च—[illegible] ।
३. [illegible] क१ ल२ ब म श रा च—
तमतिक्रम्य ।
४. ब म—निहता ।
५. कै म ल१ रा च—†०सीजनः
६. ब—[illegible]० ।
म श—०[illegible] ।
कै ल१ रा—०[illegible]० ।
७. अ—†दीपमालिनीं ।
८. कै—कर्तुं तं । अ म—[illegible] ।
च—कांतं च ।
९. ल२—समुद्रमपिगच्छ० ।
१०. ब म श—कपाट० ।
११. ल१ ल२ ब म श—[illegible] ।
१२. ब म श—†कौबेरीमा० ।
१३. कै ल१ ल२ ब म श रा अ च—
नास्ति ।
१४. कै म रा च—‡ [illegible] ।
म—†केष्वपि [illegible] ।

रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।
२८] ततः समुद्रस्तर्तव्योऽगाधः पुलिनसंवृतः ॥२७॥ [N
स देशो ह्यतरङ्गोऽभून्मुनिना शापनिर्मितः ।
२९] उपहारं तु विन्यस्तं तरंगैराकुलीकृतम् ॥२८॥ [N
दृष्ट्वा भगवता शप्तो ह्यतरंगो भविष्यसि ।
३०] ततश्च शापतस्तस्य समुद्रो वै महात्मनः ॥२९॥ [N
अतरंगोऽभवत् क्षिप्रं निर्मलादर्शनिर्मलः ॥
३१] ततो द्वीपं समुद्रस्य शतयोजनमायतम् । [N
तमतिक्रम्य शैलेन्द्रो महेन्द्रो नाम पर्वतः ॥३०॥
३२] जातरूपमयैः शृङ्गै रप्सरोगणसेवितैः । [२१
३३पू] सिद्धचारणसंघैश्च विप्रकीर्णो मनोरमः ॥३१॥ [२२पू
N] नानापक्षिगणैर् जुष्टो बहुकिन्नरसेवितः । [N
३३ उ] यमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥३२॥ [२३ उ
३६ उ] पुष्पितैः पादपैः कीर्णः सिद्धचारणसेवितः [N

---

१. ल₁—† गाढ: ।
२. म—‡ उपहारं ।
३. कै अ ल₁ ल₂ ब म श रा—भविष्यति ।
४. कै—ततः शासनता तस्य ।
अ च—ततः स शासनात्तस्य ।
रा—ततः † शासनतां तस्य ।
भ—ततः स शासनात्तस्य ।
५. कै ब—† समुद्रं ।
६. ल₁ ल₂ ब म श—० सन्निभः ।
७. ल₂—† ०मायुतं ।
८. ब म—शैलेन्द्रं ।
९. रा—शैलेन्द्रो ।
१०. ल₂—† जातरूपमयः ।
११. ल₁—† सेवितं । च—† सेविता ।
१२. म—सिद्धचारण...(ग्रन्थपातः) ।
१३. म—नास्ति ।
कै अ ल₁,ल₂ ब श रा च—विप्रकीर्णैर् ।
१४. च—† मनोरमाः । म—नास्ति ।
१५. म—नास्ति ।
१६. अ—† ०यमुपैति ।
१७. च नास्ति ।
१८. ल₁—नास्ति ।
१९. अ—† कीर्णं ।

N] तत्राप्रमत्ता वैदेहीं विचिन्वंतु वनौकसः ॥३३॥ [N
द्वीपस्तस्य गिरेः पार्श्वे शतयोजनमायतः । [२३ उ
१५] अगम्यं मानुषैः सर्वैर् यमाहुर् वनगोचराः ॥३४॥ [२४
तमतिक्रम्य द्वीपं तु गिरिं द्रक्ष्यथ काञ्चनम् ॥३५॥ [N
१९] उत्थितः सागरं भित्त्वा वयस्यश्चन्द्रसूर्ययोः ।
N] प्रविष्टो ब्रह्मभवनं शृङ्गेण महता गिरिः ॥३६॥ [N
चंद्रसूर्यांशुसंकाशः सागराम्बुपरिप्लुतः ।
४०] भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव ॥३७॥ [२९
तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः ।
४१] श्वेतं राजतरूपं च सेवते यं निशाकरः ॥३८॥
४२पू] न तत्र कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः । [३१पू
N] नातप्ततपसः केचिन् न च पापकृतो जनाः ।[11] [N
४२ उ] प्रणम्य शिरसा शैलं विचिन्वन्तु वनौकसः ॥३९॥ [३१ उ
तं तु शैलमतिक्रम्य गिरिमादित्यसन्निभम् ।[14]
४३] परं पारं समुद्रस्य योजनानि चतुर्दश ॥४०॥ [३२

---

१. अ ल१, ल२ ब म श र। भ च—अगम्यो ।

२. ब म—+ वनगोचरः ।

३. इत ऊर्ध्वं सर्वे स्मृत्येव प्रेरिताः पुनः पठन्ति—

तत्र सीतां च वैदेहीं निलयं रावणस्य च ।

४. श—ब्रह्मभवनं ।

५. कै अ ल१, ल२ ब श रा च—†अंशेन ।

६. कै ल१, ल२ ब म श रा—* ‡ यं दिवा० ।

७. श—†श्वेतं ।

८. ब म—रजतरूपं ।

९. कै ल१, ल२ ब म श रा—‡यं निशा० ।

१०. ब म—जनः ।

११. भ प्रान्तेऽपरहस्तेन विन्यस्तः ।

१२. श—†दिवौकसः ।

१३. ब—शिरसाभिस्य० ।

१४. ल१—इतः परं 'ततः शके' स्यम्रिमः ४५ शः श्लोकः पठितः ।

१५. अ च परे पारे समुद्रस्य ।
कै ल१ म श रा—पारं समुद्रस्य गिरिर् ।
ब—०द्रस्य गिरेर् ।

तत्र भुक्त्वा वराग्राणि मूलानि च फलानि च ।
४९] बहूनि च महार्हाणि गच्छेयुर् वानराः परम् ॥४१॥ [१४
ततः सागरमुत्तीर्य विद्युद्वान् नाम पर्वतः ।
४४] सर्वकामफलैर् वृक्षैर् निर्मितो विश्वकर्मणा ॥४२॥ [११
तस्य पर्वतशृङ्गेषु वनेषूपवनेषु च ।
४९] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥४३॥ [N
तमतिक्रम्य दुर्धर्षं माल्यवान् नाम पर्वतः ।
N] अध्वानं दुर्विषहं च योजनानि चतुर्दश ॥४४॥ [N
ततः शक्रध्वजाकारः कुंजरो नाम पर्वतः ।
५०] अगस्त्यभवनं चात्र निर्मितं विश्वकर्मणा ॥४५॥ [१५
सरित् तत्राञ्जना नाम तामुवाच मुनिस्ततः ।
५५] अगस्त्यो ह्यभिषेकार्थं कुञ्जरागमनं प्रति ॥४६॥ [N
सा समूलौषधिवना सपर्वतवनाकुला ।
५६] कुञ्जरं पर्वतं गत्वा महर्षिं तमुपस्थिता ॥४७॥ [N
रक्तचन्दनसंरक्ता मणिविद्रुमशर्करा ।
५७] देवर्षिचरिता पुण्या पवित्रेव सरस्वती ॥४८॥ [N

---

१. अ म च—मधूनि ।
२. कै ल$_1$, ल$_2$ ब म श रा—गच्छेयुरथ वानराः ।
३. म—†विद्युत्वान् ।
४. ल$_2$—नास्ति ।
५. रा—नास्ति ।
६. ल$_2$—नास्ति ।
७. म—दुर्धर्षं ।
८. म—नामतः । प्रान्तेऽपरहस्तेन 'पर्वते' इति शोधितम् ।
९. ब—अतःपरमधिकः पाठः ।
सर्वकामफलैर्वृक्षैर्निर्मितो विश्वकर्मणा ।
४२ श्लोकार्धस्य भ्रमाभ्यासः ।
१०. अ—तत्र शक्र० ।
म—†ततश्शक्र० ।
११. अ—†समूलौषधि० ।
१२. अ म च—०वनाकरा ।
१३. कै ल$_2$—नास्ति ।

तत्र योजनविस्तारमायतं शतयोजनम्
५१] तोरणं काञ्चनं दिव्यं पन्नगैरुपसेवितम् ॥४९॥ [३६
तत्र भोगवती नाम सर्पाणां निलयः पुरी ।
५२] विशालरथ्या दुर्धर्षा तप्तकाञ्चनतोरणा ॥५०॥ [३७पू
रक्षिता पन्नगैर् दिव्यैस् तीक्ष्णदंष्ट्रैर् महाविषैः [३७उ
५३] सर्पराजो महातेजा यस्यां वसति वासुकिः ॥५१॥ [३८पू
तच्छोभयति निर्माणं तोरणं दक्षिणां दिशम् ।
N] पर्वतं तां पुरीं चैव मार्गध्वं वानरोत्तमाः ॥५२॥ [N
तमतिक्रम्य शैलेन्द्रो महान्वृषभसंस्थितः ।
५८] सर्वरत्नमयः श्रीमान् नानाधातुविभूषितः ॥५३॥ [४०
गोशीर्षं चन्दनं पद्मं हरिश्यामं च चन्दनम् ।
५९] दिव्यमुत्पद्यते यत्र चन्दनं चाग्निसन्निभम् ॥५४॥ [४१
न च तच्चन्दनं दिव्यं स्प्रष्टव्यं वनगोचरैः ।
६०] रोहिता नाम गन्धर्वा गोपायन्ति च तद्वनम् ॥५५॥ [४२
तत्र गन्धर्वपतयश् चत्वारः सूर्यवर्चसः ।
६१] शैलूषो ग्रामणीर् भिक्षुः सुवर्णेशुश्चैव वानराः ॥५६॥ [४३

---

१. क१ क२ घ म—
तद् त्रियो० ।
भ च—†तं त्रियो० ।
कै—ततित्रयोजनविस्तीर्णमा० ।
व म—तत् त्रियोजन विस्तारमा०
२. भ—†०गैरुपशोभितः ।
च—अत्रत्य "पन्नगै"रित्यादिः
५१ तमपूर्वार्धस्य 'पन्नगै' रितिपर्यन्तः
पाठो नास्ति ।
३. भ क२ व म भ च—†निलया ।
४. कै रा—सपर्वती ।
ल१ ल२ व म श—सपर्वतां ।
५. म—† वानरोत्तम ।
६. म—महावृषभसं० ।
७. कै ल१ व म रा—‡ स्प्रष्टव्यं ।
भ घ च—‡ स्प्रष्टव्यं ।
८. ल२—नागगन्ध० ।
९. भ ल२ च—शैलूषो ।
१०. कै व म—ग्रामणी० ।
श—ग्रामणीर्भि० ।
११. कै भ च—स्वचत्नु० । म—स्वचक्षु० ।

अभिगच्छन्ति तं देशं दिव्याश्चाप्सरसां गणाः।
N] तथा चैव विचेतव्यम् त्रिशृङ्गो नाम पर्वतः ॥५७॥ [N
६३ उ] तत्र सौमनसा नाम शृङ्गात् स्रवति सा नदी।
तत्र सानुषु चित्रेषु चन्दनागुरुगन्धिषु ॥५८॥ [N
६४] शिलातलविनिष्पिष्टाः क्रीडन्तीवं महोर्मयः।
तस्याः पुलिनशालिन्यास्तीरे रम्ये मनोहरे ॥५९॥ [N
६५] उत्तरे पर्वतश्रेष्ठे रोध्रनीवारसंवृते।
विहङ्गा मधुराभाषा नानावर्णोपशोभिताः॥ ६०॥ [N
N] देवारण्यनिवासाश्च कोकिला मधुरस्वनाः।
अन्ये च विहगा मुख्या मृगसङ्घा मनोहराः॥६१॥ [N
N] दृश्यन्ते तत्र भूमौ वा पर्वतेषु गुहासु च। [N
अतः परमनाधृष्यो यमलोकः सुदारुणः ॥६२॥ [४५पू
६६] संकुला राजधानी च कृष्णेन तमसा वृता। [४५ उ
तामतिक्रम्य शैलेन्द्रस्तत्र पारिप्लवः प्रभुः ॥६३॥ [N
६७] प्रासादः काञ्चनैः स्तम्भैर् वज्रवैदूर्यवेदिकैः।

---

१. अ च—तान् देशान्।
२. ल१, ल२ म श—तथैव च।
३. ब—† विचेतव्यं।
४. ब—तत्रासौमन०।
५. अ च—शृङ्गाग्रात् स्रवते नदी।
म—शृंगे वसति सा नदी।
६. कै ल१ ब म रा भ च—विनिर्विष्टाः।
७. श—क्रीडंत्येव।
८. ब श—पर्वते श्रेष्ठे।
म—†पर्वते श्रेष्ठो।
९. अ—‡ रोध्रनीवार०।
१०. म—प्रान्तेऽपरहस्तेन।
११. अ म च—मधुरस्वराः।
१२. म—प्रान्तेऽपरहस्तेन।
१३. ल१—†मृगसंगा म०।
म—†मृगसंगमनोहरः।
१४. म—‡दृश्यन्त।
१५. ल१—०मनोरहो।
१६. श—तमतिक्र०।
१७. म—पारीप्लवः।
१८. कै अ ल१, ल२ ब म श रा च—प्रासादक०।

नानाद्रुमलतागुल्मैः पर्वतैः समलङ्कृतः[1] ॥६४॥ [N
६८] तत्र वैवस्वतो राजा धर्मासनगतः प्रभुः ।
६९पू] बिभर्ति[2] सर्वभूतानामुभे सुकृतदुष्कृते[3] ॥६५॥ [N
तं तु देशमतिक्रम्य दिव्यैः कनकपर्वतः[4] ।
N] मुक्तामणिफलैर् हृद्यैः प्रवालांकुरकोमलैः ॥६६॥ [N
६९ उ] तृणांगेराश्रमस्तत्र[5] महर्षेः पुण्यकर्मणः ।
अन्ते[6] पृथिव्या दुर्धर्षः स्वर्गे[7] च[8] वसति स्वयम् ॥६७॥ [४४
७०] एतावदेव युष्माभिः[9] शक्यं वानरपुंगवाः ।
७१पू] अभिगन्तुं विचेतुं[10] वा दक्षिणां ककुभं[11] प्रति ॥६८॥ [४६
तृणांगेराश्रमं[12] गत्वा तत्र विज्ञाय मैथिलीम् ।
७२] शीघ्रमेव निवर्तध्वं कृतकृत्या वनौकसः ॥६९॥ [N
७१ उ] अभास्करममर्यादं[13] नातः परतरं भवेत् । [N
N] सर्वमेतद् विचेतव्यं यच्चान्यदपि दृश्यते ।[14] [४७पू
N] निखिलेन विचेतव्यं यत्नवद्भिर् विहंगमैः[16] ॥७०॥[17] [N

---

१. अ ब म च—पर्वत: ।
श—।पर्वतं ।
२. ब—†बिभ्रति ।
म—‡बिभंति ।
३. अ म च—०‡तदुःकृते ।
४. कै अ ल, ब रा म च—
दिव्याः कनकपर्वताः ।
५. अ च—‡त्रिणंगेरा० ।
म—‡ तृणांगोरा० ।
म—त्रिणांगोरा० ।
६. म—आस्ते ।
७. ल₂ म श—नास्ति ।
८. म—वावसति ।
९. ल₂ म श—नास्ति ।
१०. ल₂—‡ विचरू ।
११. ब—†०ककुभां । म—शक्षेणागमं ।
१२. कै अ च—‡ त्रिणंकेरा० ।
१३. कै—आभास्करमाम० ।
रा—हरितालेन शोधितोऽकारः ।
ल, ब म—आभास्करममर्यादं ।
१४. म—प्रान्तेऽपरहस्तेन ।
१५. कै अ ल, म श रा म च—
प्रचेतव्यं ।
१६. अ—। प्लवंगमैः ।
१७. म—प्रान्तेऽपरहस्तेन ।

यो मां निवृत्तो युष्माकं सीतां दृष्टेति वक्ष्यति । [४८

७१] स मे तुल्यफलो राज्ये मानार्हश्च भविष्यति ॥७१॥

७४पू] निखिलेन विचेतव्यं यथाऽऽदिष्टं वनौकसः । [N

७७उ] ऊर्ध्वं मासाच्च वस्तव्यं वसन् वध्यो भवेन्मम ॥७२॥

यथोक्तं चैव कर्तव्यमेवं स्यां प्रीतिमानहम् । [N

७८] अन्यथा संशयो वः स्याद्दाराणां जीवितस्य च ॥७३॥ [N

अमितबलपराक्रमा भवन्तो

गुणविपुलेषु कुलेषु च प्रसूताः ।

मनुजपतिसुतां यथा लभध्वं

७९] तदधिगुणं पुरुषार्थमारभध्वम् ॥७४॥ [५०

---

१. म—‡युष्मभ्यः ।

२ कै ब रा—सीतां ।

३. कै ल₁ ब म श—तुल्यबलो ।

४. ल₁—निखिलैश्च ।

५. कै अ ब रा भ च—यथादृष्टं ।

६. कै—† कुबेर्मासं ।

ल₁ ल₂ म श—ऊर्ध्वं मासं ।

ब—‡ कुर्व्यैमांसं ।

रा—† कुबेमासं ।

७. ल₁ ल₂ श—अतोऽन्यथा संशयो वो हरीणां ।

म—अतोऽन्यथा संशयो वो † स्याद्धरीणां ।

कै ब—॰योवः स्याद्धरीणां ।

रा—‡ ॰योवः स्याद्धरीणां ।

८. च—नास्ति ।

९. म—तदधिगुणपुरु॰ ।

१०. रा—नास्ति ।

अतिबल बलमाश्रितस्तवाहं
तव मतिविक्रमपौरुषस्य कालः ।
अनिलसुत यथाऽधिगम्यते सा
N] जनकसुता हनुमंस्तथा कुरुष्व ॥ ७९ ॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे दक्षिणदिग्वर्णनं नाम
त्रयस्त्रिंशः सर्गः ॥३३॥

---

१. अ म य—अतिबलं ।
ह्र—अमितबलबला० ।
२. य—+ हनुमांस्तथा० ।
३. ङ₂—नास्ति । म—०र्ये किष्कि० ।
४. ङ₁ य म—किष्किन्धाका० ।
म—नास्ति ।
५. अ य—दिग्विजये दक्षिण० ।
भ—दिग्विजये [ दक्षिणदिग्वर्णनं० ।
य—दक्षिणदिग्वि वर्णनं ।

## [वं-४२] = [ चतुस्त्रिंशः सर्गः ] = [दा०-४४]

ततः प्रस्थाप्य सुग्रीवो हनुमत्प्रमुखान् हरीन् ।
N] बुद्धिविक्रमसंपन्नान् वायुवेगसमाञ् जवे ॥ १॥ [N
विशेषेण तु सुग्रीवो हनुमन्तमुवाच ह ।
१] स हि तस्मिन् हरिश्रेष्ठे संभावयति विक्रमम् ॥२॥ [१
न भूमौ नान्तरिक्षे च नाम्बरे नामरालये ।
२] अप्सु वा गतिभङ्गं ते पश्यामि हरिपुङ्गव ॥३॥ [२
सामराः सहगन्धर्वाः सैनागासुरदानवाः ।
३] विदिता वीर लोकास्ते ससागरधराधराः ॥४॥ [४
गतिर्वेगश्च तेजश्च लाघवं च महाकपे ।
४] पितुस्ते सदृशं वीर्यं मारुतस्य महात्मनः ॥५॥ [५
तेजसाऽपि बलेनापि न समो विद्यते भुवि ।
५] यथाऽद्य दृश्यते सीता तथा त्वं कर्तुमर्हसि ॥ ६॥ [६
वीर्यं शक्तिस्तथोत्साहो गतिश्चैव पराक्रमः ।
६] देशकालानुवृत्तिश्च नयश्चात्र समाहितः ॥७॥ [७

---

१. ब—प्रभृति ।
२. म—हनूमान् प्रमुखान् ।
३. म—नास्ति ।
४. कै अ भ च—हनूमंतमु० ।
५. कै ल$_1$—सनगासुर० ।
अ च—सनागाः सुर० ।
म—सनागः सुर० ।
६. श—गतिवेगश्च ।
७. ब—लाघवश्च ।
रा—राघवं च ।
८. अ भ च—
तेजसा च भूतं ते न समं भुवि विद्यते।
९. भ—
यथाद्य दृश्यते तात कर्तुमर्हसि वानर ।
१०. कै ल$_1$ ल$_2$ ब म श रा भ—
०स्तथा नित्यं ।
११. ल$_1$ रा च—देशकालोऽनुवृत्तिश्च ।
१२. कै अ ल$_1$ ल$_2$ ब म श रा च—
०नयश्चार्थसमा० ।

ततः कार्यसमासक्तिमवगम्य[1] हनूमतः[2] ।
८] विदित्वा च हनूमन्तं चिन्तयामास राघवः ॥८॥ [८
सर्वथा[3] निश्चितार्थोऽयं[4] हनूमति कपीश्वरः[5] ।
९] निश्चितार्थतरश्चापि हनूमान् कार्यसाधने ॥९॥ [९
तदेवं[6] प्रस्थितो[7] वाग्भिः[8] परिज्ञातश्च कर्मभिः ।
१०] अयं मामनुगृह्णीयात् साधयेत्[9] फलोदयम् ॥१०॥ [१०
स समीक्ष्य महातेजा व्यवसायेन वानरम् ।
११] कृतार्थ इति निर्वृत्तः प्रहृष्टेन्द्रियमानसः ॥११॥ [११
ददौ तस्य ततः[11] प्रीतः स्वनामाङ्कोपशोभितम् ।
१२] अङ्गुलीयमभिज्ञाने[12] राजपुत्र्याः परंतपः ॥१२[13]॥ [१२
एतद् दृष्ट्वा[14] हरे सीता दर्शनेन जनकात्मजा ।
१३] मंस्यते मभियुक्तं त्वां न चोद्वेगं गमिष्यति ॥१३॥ [१३
व्यवसायो हि ते वीर प्रभावश्चैव कर्मणाम् ।
१४] सुग्रीवस्य च संदेशः[16] सिद्धिं कथयतीव मे ॥१४॥ [१४

---

१. कै अ ल$_2$ ब रा—०समासक्तम०।
म श—समासक्तमवगाह्य ।
म—०मायुक्तमवग० ।
२. कै अ ल$_2$ ब रा च—हनूमता ।
३. श—सर्वथा ।
४. म श—०तार्थोऽहं ।
५. ल$_2$—नास्ति ।
६. कै अ ल$_2$ रा म च—तदेव ।
७. कै अ ल$_1$ ल$_2$ ब म ग रा च—प्रस्थितं ।
८. के अ ल$_1$ ल$_2$ ब म श रा च—परं ज्ञानं च ।
९. म—†साद्येत् ।
१०. च—नास्ति ।
११. ब—†प्रात: ।
१२. अ ब म—०अभिज्ञानं ।
१३. च—नास्ति ।
१४. कै ल$_1$ म च—हरेः ।
१५. कै ल$_2$ रा—पश्यते ।
अ ब म श—पश्यन्ती ।
ल$_1$—पश्यती ।
१६. म—सिद्धं ।

तद् गृहीत्वा हरिश्रेष्ठो मूर्ध्नि कृत्वा कृताञ्जलिः ।
१५पू] पादौ स्पृष्ट्वा च रामस्य सुग्रीवस्य महात्मनः । [१५
१५उ] सहायैः सहितः सौम्यः पुप्लुवे वानरर्षभः ॥१५॥ [N
प्रहर्षयन् वानरसैन्यमायतं
हरिप्रवीरः श्वसनात्मजः कपिः ।
गताम्बुदः व्योम्नि विशुद्धमण्डलः
१६] शशीव नक्षत्रगणैः समावृतः ॥१६॥ [१६

इत्यार्षे रामायणे किष्किन्धाकाण्डे अंगुलीयप्रदानं नाम
चतुर्दशः सर्गः ॥ १४ ॥

---

१. कै अ छ१ छ२ म ग्र रा भ च—
 † सहायः सहितः ।
२. म—०सै न्यमागतं ।
३. अ व च—†गताम्बुदो ।
 रा—‡गताम्बुदो ।
४. रा—विशुद्धमण्डले ।
५. च—नास्ति ।
६. छ१ व म ग्र रा—किष्किन्धाकाण्डे० ।
 म—नास्ति ।
७. भ च—अंगुलीयकप्र० ।
 म—०लीयकप्रदानं ।

## [बं-४१]=[ पञ्चत्रिंशः सर्गः ]=[ दा-४२ ]

ततः प्रस्थाप्य सुग्रीवो हनुमत्प्रमुखान् हरीन् । [१पू
१] बुद्धिविक्रमसंपन्नान् वायुवेगसमाञ्‌ जवे ॥१॥ [N
अथाहूय महातेजाः सुषेणं नाम वानरम् । [१उ
२] तारायाः पितरं वीरं श्वशुरं भीमविक्रमम् ॥२॥ [२पू
३पू] कपिं सेनापतिं वाक्यमभिवाद्य प्रसाद्य च । [२उ
N] उवाच वानरं तत्र प्रहस्य हरिपुंगवः ॥३॥ [N
३उ] साहाय्यं कुरु रामस्य कृत्येऽस्मिन् समुपस्थिते ४। [N
द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमः ॥४॥ [५पू
४] इतः शीघ्रं प्रयाहि त्वं विशालां पश्चिमां पुरीम् । [N
N] मार्गध्वं तत्र वैदेहीं निलयं रावणस्य च ॥५॥ [१२पू
सुराष्ट्रान् सहबाह्लीकाञ्‌ शूद्राभीरांस्तथैव च ।
५] स्फीताञ्‌ जनपदांश्चैव विशालानि पुराणि च ॥६॥ [६
१०पू] घोषवत्यो विशालाश्च नद्यः शीतजलाः शिवाः । [८पू
७उ] पुन्नागनागगहनं बकुलैरधिवासितम् ॥ ७ ॥
N] तथा केतकखण्डांश्च मार्गध्वं हरिपुङ्गवाः । [७
६उ] तत्र केतकषण्डेषु मङ्कुतालीवनेषु च ॥८॥

---

१. ल$_{२}$ ब म श—कपीन् ।
२. के ल$_{१}$ ल$_{२}$ ब म श रा—आहूयच् ।
३. ल$_{१}$ ल$_{२}$ ब म श—कृते ।
४. म—प्राप्तेऽपरहस्तेन ।
५. ल$_{२}$—पंचमां ।
६. के श ल$_{१}$—बाल्मीकान् ।
ल$_{२}$ ब म श रा च—वल्मीकान् ।
७. म—॰पदांश्चाम्यान् ।
८. म—हि ।
९. ल$_{१}$ श —घोषवंत्यो ।
१०. रा—†॰गगहनां ।
११. रा—†॰वासितां ।
१२. कै—तेषां ।
१३. के ल$_{१}$ ल$_{२}$ ब म—केतकषंडेश्च ।
श रा - केतकसंडेश्च ।
१४. के—अन्येश्च । (अपरहस्तेन)
ल$_{१}$ ल$_{२}$ ब म श रा—†केतकैः ।
१५. श रा म च—॰खंडेषु ।

७पू] कपयो विहरिष्यन्ति नारिकेलवनेषु च । [११

N] तत्र तत्र च गच्छध्वं नदीः शीतजलाः शुभाः ॥९॥ [N

१० उ] तापसानामरण्यानि कान्तारंगिरय(?)स्तथा । [८उ

११पू] केकयानं सिन्धुसौवीरान् मालवांश्चारुदर्शनान ॥१०॥[N

११ उ] गिरिजालावृतं चैवं नानासत्त्वसमाकुलम् ।

N] महाग्राहसमाकीर्णं सागरं चापि पश्चिमम् ॥११॥ [N

१२ उ] द्वीपांश्च विविधांस्तत्र चित्रपादपशोभितान् । [N

८पू] मरीचिपत्तनं रम्यं पुण्यं चैव बृहद्वनम् ॥१२॥ [१३पू

N] सरितः सागरान् शैलान् मृगपध्वं वनौकसः । [N

पुराणि च विशालानि प्रतीच्यां यानि कानिचित् ॥१३॥

N] रत्नवन्ति च मुख्यानि पत्तनानि ततस्ततः । [१३ उ

१३ उ] सिन्धुसागरयोश्चापि सङ्गमे तत्र पर्वतः ॥१४॥

महाहेमगिरिर्नामं शतशृङ्गो महाद्रुमः ।

१४] तस्य प्रस्थेषु रम्येषु सिंहाः क्रीडन्ति सर्वशः॥१५॥ [१५पू

दृप्ताश्च मत्तमातङ्गाम् तोयदस्वननिस्वनाः । [१६पू

१५ उ] तत्र पक्षिसमाः सिंहा बहवो नीडवासिनः ॥१६॥ [N

---

१. कै अ च—नारिकेरव० ।

२. कै ल$_1$,ल$_2$ ब म श रा—कांतारा गिर०

३. कै अ रा च—कैकयान् ।

म—† कैकीयान् ।

ल$_1$ ब श म—कैकेयान् ।

४. कै अ ल$_1$ ल$_2$ ब म श रा च—

०आकावृतां चैव ।

५. कै ल$_1$ ल$_2$ ब म श रा म—

†०कुरुकान् ।

६. ल$_2$ रा—मरीचिपत्तनं ।

च—०पत्तनं ।

७. कै अ ल$_1$ ल$_2$ ब म श रा च—

बृहद्वलं ।

८. ल$_1$—विचित्राणि ।

९. म—०सागरयोश्चैव ।

श—०सागरयोस्तत्र ।

१०. ल$_1$—०गिरिस्तत्र ।

११. अ—†पक्षसमान् सिंहान् ।

ल$_1$—†पक्षिसमां सिं० ।

ल$_2$ म—† पक्षसमाः सिं० ।

च—†०माः सिंहान् ।

१२. म ल$_1$ ल$_2$ ब म श रा च—

नीलवासिनः ।

कै—अत्रेदमधिकमत्र बृहद्वनमुपलभ्यते ।

न त्वासादयितव्या हि पुरा दत्तवरा हि ते[1] । [N
१६] तिमिमत्स्यान्[2] गजांश्चैव नीडेष्वारोपयन्ति ते ॥१७॥ [१५पू
सरस्तत्र सुविस्तीर्णं नलिनी च मनोहरा । [N
१७] तानि नीडानि यत्नेन गिरिशृङ्गशतं च तत् ॥१८॥ [१६पू
सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ।
१८] विस्तरेण च तीर्थानि विचेतव्यानि वानराः ॥१९॥ [N
N] तापसानामरण्यानि कान्तारगिरयश्च ये ।
मरुधन्वा मेरुश्चैव शूद्राभीरालयास्तथा ।
१९] गिरयश्च विचेतव्या वनान्युपवनानि च ॥२०॥ [N
स्त्रीराज्यं च सदा व्यस्तं दत्तचक्रं मरुत्पतिम् ।
२०] पुराणि यवनानां च विचिन्वन्तु वनौकसः ॥२१॥ [N
२१उ] ततः पञ्चनदं रम्यं विचेतव्यं समन्ततः[14] ॥२२॥
काश्मीरमण्डलं चैव शमीपीलुवनानि च । [N

---

१. भ—भ्रान्त्येऽपरहस्तेन ।
२. कै ल$_1$, ल$_2$ ब म श रा—॰मत्स्याण्डजांश्चैव ।
३. अ भ—सिंहानां ।
ल$_1$—तीर्थानि ।
४. अ—†वः । ब—यत् ।
५. कै—नास्ति ।
६. ल$_1$—यवनः ।
७. ल$_1$, ल$_2$ ब म श—कांतारा गिर॰ ।
८. कै ब श—॰धन्वा मरुश्चैव ।
अ रा म च—॰धन्वमरुश्चैव ।
९. ल$_1$ ल$_2$ म श रा—†॰कपस्तथा ।
ब—†शूद्राभीरा॰ ।
१०. च—स्वराज्यं ।
११. म—न्यस्तं ।
१२. अ च—पवनानि ।
१३. भ—कुरुं ।
१४. कै ल$_1$, ल$_2$ ब म श रा—नास्ति ।
१५. कै ल$_1$, ल$_2$ ब म श रा—कश्मीरमं॰ ।
१६. भ—वानरैर्भोजकम्पेपमैः ।

२२] पुराणि [1]पौरदानां च विचेतव्यानि [2]वानरैः ॥[3]२३॥ [N
२३पू] ततस्तक्ष[4]शिलां [4]नाम [5]शाकलं [6]पुष्करावतीम् । [N
N] [7]आरट्टं कपि[8]संवाहा मार्गध्वं [9]वनविस्तरं ॥२४॥ [N
तथा [10]गान्धारदेशं च [11]मरुभूमिं च सर्वशः ।
२४] विचेयं रमणीयं च केकयानां निवेशनम् ॥२५॥ [N
अन्ये चापि विचेतव्या देशाः सागरकाननाः ।
N] [12]अन्विष्यद्भिः पदं तस्य(?।ः)सीताया रावणस्य च ॥२६॥ [N
ततः पश्चिममासाद्य समुद्रं भीमदर्शनम् ।[13]
२६] मार्गध्वं वानरास्तत्र [14]भीमं [15]सागरमुत्तमम् ॥[16][17]२७॥ [N
[17]ततः [18]शृङ्गं गिरेस्तस्य चित्र[19]काञ्चनमालिनः ।
२७] [20]पारियात्रस्य शैलस्य विचेयम[21]कुतोभयैः ॥२८॥ [N

---

१. ल₂ म श—पादपानां ।
के ल₁ अ रा भ च—पारदानां ।
२. के ल₁ म श रा—पारदैः ।
ल₁ ब—दारदैः । भ—पादपैः ।
३. भ—( प्राग्वेऽपरहस्तेन )
४. ल₁ ल₂ ब रा भ—तक्षशिला नाम ।
५. के ल₁ ल₂ ब भ—शाकलां ।
६. अ भ—‡पुष्करावतां ।
च—‡पुष्करावतं ।
७. के ल₁ ल₂ ब म श रा च—आरट्टं ।
८. अ भ च—‡ सवाहिं ।
९. के ल₁ ल₂ ब म श रा—वनविस्तरे ।
१०. भ—गान्धार० ।
११. के ल₂ ब म रा—मरुस्तस्य ।
ल₁ श—मरुतस्य ।
भ—हरिभूमिं ।
१२. अ भ च—अन्विष्यद्भिः ।
रा—‡ अन्विषद्भिः ।
१३. च₁—नास्ति ।
१४. ल₂ ब म श—देवं ।
१५. रा—सागररूपिणं ।
भ—सागरपत्तनं ।
१६. च—नास्ति ।
१७. च—नास्ति ।
१८. अ—भृगगिरेस्त० ।
च—नास्ति ।
१९. अ भ च—०नपादपं ।
२०. के ल₁ ल₂ ब म श रा—पारिजातस्य ।
२१. ब—विचेतव्यमकु० ।
म—†०तो भयाः ।

यत्रासौ विंशतिश्चात्र गन्धर्वाणां महात्मनाम् ।
२८] वसन्त्यग्निनिकाशानां कोट्यो वानरपुंगवाः ॥२९॥ [१९
दूरतो वर्जनीयास्ते वानरैर् भीमविक्रमैः । [२०उ
२९] नादेयं फलमूलं च तस्मिन् देशे प्लवंगमैः ॥३०॥
अप्रधृष्या हि ते वीराः सत्त्ववन्तो विशेषतः । [२१
३०] रक्षन्ति फलमूलं च गन्धर्वा भीमविक्रमाः ॥३१॥
तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी । [२२पू
३१] न हि वोऽस्ति भयं किंचित् तत् सर्वमनुवर्तताम् ॥३२॥[२३उ
चतुर्भागे समुद्रस्य चक्रवान् नाम पर्वतः । [२५पू
३२] सर्वरत्नमयैः शृङ्गैर्नित्यकालफलद्रुमैः ॥३३॥ [N
तत्र तु चक्रं सहस्रारं वज्रनाभमयस्मयम् ।
३३] मुरारिमथनं दिव्यं निर्मितं विश्वकर्मणा ॥३४॥ [२५उ
तत्र मेघौघनिर्घोषैः पाञ्चजन्यो ह्यरिंदमः । [N
N] गत्वा दशशतावर्तं देशं सं मधुसूदनः ॥३५॥ [N
ततः पाञ्चजनं हत्वा हयग्रीवं च दानवम् ।
३४] आजहार पुरा शङ्खं चक्रं च पुरुषोत्तमः ॥३६॥ [२६
३८पू] ततो मेघनिभोऽत्युच्चैः स वज्राशनिनिस्वनैः । [N

---

१. कै ल$_2$ ब म—नादेये फलमूले ।
ल$_1$ रा—नादेयफलमूले ।
श—न देये फलमूले ।
२. च—तत्र ।
३. रा—सहस्रार्ध० ।
४. अ म च—०नाभमयं स्वयं ।
५. म श—मुरारिम० ।
६. म—सं ह । च—स च ।
७. ल$_1$—†०निर्दोषः ।
८. म—सं ।
९. कै अ ल$_1$ ल$_2$ ब श रा म च—पाञ्चजनं ।
१०. म—मेघ इवात्यु० ।
११. श म—०शनिनिस्वनं ।
म—‡०निनिःस्वनः ।

योजनानि चतुःषष्टिर् वैराहो नाम पर्वतः ।
१६] सुवर्णशृङ्गः श्रीमांश्च अगाधे वरुणालये ॥३७॥ [२८
तस्य चित्रेषु पार्श्वेषु नितम्बेषु गुहासु च ।
N] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥३८॥ [N
प्राग्ज्योतिषं नाम ततो जातरूपमयं पुरम् ।
N] यस्मिन् वसति दुष्टात्मा नरको नाम दानवः ॥३९॥ [२९
तस्य सानुषु चित्रेषु विशालासु गुहासु च ।
३५] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४०॥ [३०
३७पू ] तमतिक्रम्य शैलेन्द्रं महेन्द्रप्रतिपालितम् ।
३८ उ] द्रक्ष्यन्ति कपयः शैलमुल्लिखन्तमिवाम्बरम् ॥४१॥ [N
N] स हि देवर्षिसंघैश्च काञ्चनैस्तरुभिर्वृतः । [N
३७ उ] शिखरार्धस्य धाराणां सहस्रं परिवर्तते ॥४२॥ [N
तं गजाश्च मयूराश्च सिंहव्याघ्राश्च पर्वतम् ।
३९] अभिगच्छन्ति संहृष्टा धाराशब्दकृतोत्सवाः ॥४३॥ [३२
स हि शब्दो महानासीद् भयाच्छङ्कस्य तं गिरिम् ।
N] समन्तादभिगच्छन्ति देव-दानव-राक्षसाः ॥४४॥ [N

---

१. कै ल$_1$ ब रा—०वाराहो ।
२. अ च—०मांश्चागाधे ।
म—‡ श्च प्यगाधे ।
३. कै—नगमिति प्राप्तेऽपरहस्तेन ।
४. कै अ ल$_1$ ल$_2$ ब म ध रा च—चित्रासु विशासु च ।
५. ल$_1$—नास्ति ।
६. कै ल$_1$ ल$_2$ ब म ध रा—†शिखरौघस्य ।
७. ल$_1$—†वाराणां ।
रा—†वाराणां ।
८. ल$_2$—†पालितं ।
९. अ च—‡ ०कृतोद्धराः ।
रा—कृतोद्भवाः ।
म—०कृतोद्भवाः ।
१०. ब—भयाच्छङ्कस्य ।

तस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः ।
४०] अभिषिक्तस्तदा राज्ये सुमेरो नाम्नि पर्वते[1] ॥४५॥ [११
तस्य सानुषु चित्रेषु विशालासु गुहासु च ।
N] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥४६॥ [N
तमतिक्रम्य[2] शैलेन्द्रं महेन्द्रमतिपालितम् ।
४१] षष्टिगिरिसहस्राणि[3] काञ्चनानि गमिष्यथ ॥४७॥ [१४
तरुणादित्यवर्णानि भ्राजमानानि सर्वतः ।
४२] जातरूपमयैः शृङ्गैः पुष्पितैरुपशोभितैः[4] ॥४८॥ [१५
प्रभया तेषु शैलेषु ये तत्र मृगपक्षिणः ।
N] ओषध्यश्च[5] प्रकाशन्ते पादपाश्च[6] हिरण्मयाः ॥४९॥ [N
तेषां मध्ये स्थितो राजा मेरुः कनकपर्वतः ।
४३] आदित्येन प्रसन्नेन तस्मै दत्तो वरः पुरा ॥५०॥ [१६
४४ उ] प्रभावात् तव शैलेन्द्र प्रभया ये त्वया श्रिताः ।
त्वत्प्रसादाद् भविष्यन्ति दिवारात्रं च काञ्चनाः ॥५१॥ [१७
४५] त्वयि ये चाभिवत्स्यन्ति देवदानवराक्षसाः ।
ते भविष्यन्ति रक्ताङ्गाः काञ्चनाः प्रभया तव ॥५२॥ [१८
४६] आदित्या वसवो रुद्रा मरुतश्च सहाश्विभिः ।
आगम्य पश्चिमां संध्यां मेरावुत्तमपर्वते[7] ॥५३॥ [१९
४७] आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः ।[8]

---

१. च—पर्वणि ।
रा—†पर्वणे ।
के—†ते इति प्राप्तेऽपरहस्तेन ।
२. च—समतिक्रम्य ।
३. कै छ₁—षष्टिगिरि० ।
म—षष्टिं गिरि० ।
४. अ च—०तै रूपशोभितैः ।
५. कै अ छ₁ छ₂ च म शा रा च—
‡औषध्यश्च ।
६. कै छ₁ छ₂ च म शा रा—पादपांश्च ।
७. शा—'मेरावेतमुपासते' इति
परिशोधितम् ।
८. रा—नास्ति ।

अदृश्यः सर्वभूतानामस्तं गच्छति पर्वतम् ॥५४॥ [४१
४८] योजनानां सहस्राणि दश्य(?श)तानि दिवाकरः ।
४९पू] निमेषान्तरमात्रेण तं गच्छति शिलोच्चयम् ॥५५॥ [४१
५६ उ] शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसन्निभम् ।
प्रासादतलसंबाधं निर्मितं विश्वकर्मणा ॥५६॥ [४२
५७] शोभितं तरुभिश्चित्रैर् नानापक्षिसमाकुलम् ।
५८पू] निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥५७॥ [४३
४९ उ] आश्रमो ह्यभितो मेरोर् यत्रासौ द्युतिमानृषिः ।
प्रकाशयति तं देशं द्वितीय इव भास्करः ॥५८॥ [N
५०] प्रष्टव्यो मेरुसावर्णिर् महर्षिः सूर्यसन्निभः ।
५१पू] प्रणम्य शिरसा भूमौ प्रवृत्तिर् मैथिलीं प्रति ॥५९॥ [४७
५१ उ] अंतस्य मेरोर् मध्ये तु गिरिर् दशशिरा महान् ।
जातरूपमयः श्रीमान् राजते चित्रवेदिकः ॥६०॥ [४४

---

१. श—अदृश्याः ।

२. श—†गच्छन्ति ।

३. के ल$_1$, ल$_2$ ब म श रा भ—द्वे शतानि ।

४. के ल$_1$, ल$_2$ ब म श रा—महारम्यं ।

५. श—नानावृक्षसम० ।

६. के —†आश्रमे ह्यभिरतो ।
ल$_1$—†आश्रमेऽभिरते ।
अ च—आश्रमोऽभिरतो ।
ल$_2$ म श—आश्रमेऽभिरतो ।
ब —आश्रमे ह्यभितो ।

७. के ब श रा—यत्रास्ति ।
ल$_1$, ल$_2$ म—यत्रासीत् ।

८. के अ ल$_1$, ल$_2$ ब म श रा—†तद् ।

९. के ल$_1$, ल$_2$ ब म श रा—†प्रष्टो ।

१०. के अ ल$_1$, ल$_2$ ब म श रा च—अन्तरा मेरु० ।

११. म—तत्रो दशशिरो महां ।
अ च—तत्रो दशशिरो महां ।

१२. के ल$_1$, ब म रा—जातरूपमयैः ।

५२] तेषु सर्वेषु देशेषु निर्झरेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥६१॥ [४९
५३] तप्तकाञ्चनवर्णाभं · लोहितार्कसमप्रभम् ।
अस्तमालोकयिष्यन्ति कपयः कपियूथपाः ॥६२[1]॥ [N
५४] स[2] शैलो[3] यो न[4] गन्तव्यो वानरैर् वानरर्षभाः[5] ।
तत्र वैश्वानरीभूत(?ता)स्तेजसोत्तमतेजसः ॥[6]६३॥ [N
५५] न सिंहा न च शार्दूला न मृगा न विहङ्गमाः[7] ।
अभिगच्छन्ति तं देशं न देवा न च राक्षसाः ॥६४॥ [N
५६] तस्य शृङ्गे महद् दिव्यं भवनं सूर्यसन्निभम् ।
प्रासादशतसंबाधं निर्मितं विश्वकर्मणा ॥६५[8]॥ [N
५७] शोभितं पद्मिनीभिश्च काञ्चनैश्च महाद्रुमैः[9] ।
५८पू ] निलयं(?) लोकपालस्य वरुणस्य महात्मनः ॥६६॥ [N
५९ उ] प्रतीच्यां दिशि निर्माणं निर्मितं वै स्वयम्भुवा[10] ।
६०पू ] काञ्चनो विमलः सौम्यः सोमार्चिरपि[11] वानराः ॥६७॥ [N
५८ उ] एतावज् जीवलोकस्य भास्करो र[12]जनीक्षये ।

---

१. के अ ल$_1$, ल$_2$ ब म श रा च—अस्तमालो० ।
२. के अ ल$_1$, ल$_2$ ब म श रा च—श्लोकोऽयमूनषष्टिश्लोकादूर्ध्वं पठितः ।
३. के अ ल$_1$, ल$_2$ ब श रा च—सुशैलो ।
४. म—नावगन्तव्यो ।
५. म—†वानरर्षभः ।
६. अ च—वैश्वानरो भूतस्तेजसा वर्मं तेजसः ।
भ— „ „ सत्यमं तेजसा ।
७. अ म च—पन्नगाः ।
८. म—प्राग्वेऽपरहस्तेन ।
९. ल$_2$—†०द्रुमम् ।
१०. म—०कस्ताक्षः ।
११. अ भ च—सोमार्चिर्नाम ।
१२. के—†०तु जनीक्षये ।

५९पू ] कृत्वा वितिमिरं सर्वमस्तं गच्छति पर्वतम् ॥६८॥ [४८
६० उ] एतावद् वानरैः शक्यं गन्तुं वानरपुंगवाः ।
६१पू ] अभास्करममर्यादं नाभिजानाम्यतः परम् ॥ ६९॥ [४९
N] सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति । [५१पू
स्वयमेको बलवंतां समर्थः प्रतिपालने ॥७०॥ [N
६४] श्रोतव्यं सर्वमेतस्य भवद्भिः पृष्ठगामिभिः । [५१उ
६५पू ] योऽन्यथा स्थास्यति हरिः स मे वध्यो भविष्यति॥७१॥ [N
अङ्गभूतो मम ह्येष श्वशुरो मतिमान् भृशम् ।
N] भवन्तः सर्वविक्रान्ताः प्रमाणं सर्वकर्मसु ॥७२॥ [५२
६६ उ] प्रमाणमेतं संस्थाय सर्वतः पश्चिमां दिशम् ।
भवन्तः परिमार्गन्तां यथा दृश्येत जानकी ॥७३॥ [५३
६७पू ] रामपत्न्यां हि दृष्टायां मैथिल्यां सर्वशो वयम् ।
६७उ] ऋणान्मुक्ता भविष्यामः कृतस्य प्रतिकारिणः ॥७४॥ [५४
६९ उ] ततोऽन्यदपि यत किञ्चित् कार्यमांत्ययिकं(?) हितंम ।
N] सम्प्रधार्य भवद्भिश्च देशकालानुसंहितम् ॥७५॥ [५५
६१ उ] अधिगम्य तु वैदेहीं निलयं रावणस्य च ।

---

१. कै ल२ ब म श रा—पर्वते ।
२. कै—आभास्करमामर्यादं ।
ल१ ल२ ब म श रा—आभास्करममर्यादं ।
३. श—नाधि ।
४. अ रा भ च—†बलवतो ।
५. कै अ ल१ ल२ ब म थ रा च—वेगगामिभिः ।
६. भ—प्राप्तेऽपरहस्तेन ।
७. म रा—०विक्रान्ताः ।
८. अ च—प्रमाणे ।
९. अ म च—†णमेवत् ।
१०. कै—‡०माध्येयिनं ।
म रा—‡ ०माप्ययिकं ।
अ च—‡ माप्ययिकं ।
भ—कार्यस्यास्य हितं भवेत् ।
११. श—अभिगम्य ।

६२पू] अस्तंपर्वतमासाद्य[1] निवर्तध्वं प्लवङ्गमाः ॥७६[2]॥ [५०पू
६१पू] अगम्यं हि परं तस्माद् देवैरपि सवासवैः ॥[3]७७॥ [N
६२उ] ऊर्ध्वं मासाच्च वस्तव्यं वसन् वध्यो भवेन्मम । [५०उ
N] अभिगम्य निवर्तध्वं सीतां दृष्ट्वा हरीश्वराः ॥७८॥ [N

भवान् गुरुर्मे श्वशुरः पिता यथा
सुहृत् तथाऽन्यो मम नास्ति कश्चन ।
कृतेन कार्येण यथा पुरा कृतं
६८] यथा च पश्यामि तथा विधीयताम् ॥७९॥ [N
ततः सुषेणप्रमुखाः प्लवंगमाः
सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वे प्लवगाधिपं ततो
६९] जग्मुर् दिशं ते वरुणाभिपालिताम् ॥८०॥ [५६

---

१. ब म—अस्तं पर्वत० ।
२. छ₁—अतः परं सपादपद्यद्वयी ८० तमस्य 'प्लवंगमाः' इत्यन्ता त्यक्ता ।
३. म—इत ऊर्ध्वं 'निवर्तध्वं' इत्यन्तः पाठो नास्ति ।
४. छ₂ ब—†सवासवः ।
५. म—नास्ति ।
६. रा—अधिगम्य ; म—नास्ति ।
७. रा—कृत्येन ।
८. छ₂ ब म श—तथा ।
९. म—†प्रणम्य ।
१०. कै छ₁ छ₂ ब म श रा-वरुणाभिपालिताम् ।

ततः प्रयाता द्रुमखण्डमण्डितां
पतङ्गनानाविधसेवितद्रुमाम् ।
दिशं प्रतीचीं प्रति वानरोत्तमाः
N] तदा प्रहृष्टाः परराष्ट्रमर्दनाः ॥८१॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे पश्चिमदिग्वर्णनं नाम
पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

१. ल$_1$, ल$_2$ ब म शा—द्रुमषण्डमं० ।

२. के अ ल$_1$, ल$_2$ ब म शा रा—ततः ।

३. अ—प्रहृष्टाः ।

४. ल$_1$—नास्ति ।

५. ल$_2$ ब म शा—किष्किन्धाका० । अ—नास्ति ।

१पू ] ततः प्रस्थाप्य सुग्रीवः श्वशुरं पश्चिमां दिशम् । [१पू
N] चिन्तयामास मतिमान् मुहूर्तमिव वानरः ॥१॥ [N
१उ] वीरं शतबलं नाम वानरं वानरर्षभः । [१उ
उवाच हरिराजस्तं सर्ववानरसंमतम् ॥२॥
२] राघवस्य शुभं वाक्यमशुभं रावणस्य च । [२
वृतः कोटिसहस्रेण वानराणां महौजसाम् ॥३॥
३] विवस्वतः सुतैः सार्धं प्रतिष्ठस्व मम प्रिये । [३
यक्ष-राक्षस-गन्धर्व-किन्नरेशेन धीमता ॥४॥ [N
४] पालितामेकपिङ्गेन धनदेन महात्मना ।
उत्तरां त्वं दिशं गत्वा सशैलवनकाननाम् ॥५॥ [N
N] मार्गस्व हरिभिः सार्धं देशकालानुकोविदैः ।
तत्र सीतां च वैदेहीं निलयं रावणस्य च ॥६॥ [N
५] मृगयस्व प्रयत्नेन विक्रान्तैर् हरिभिः सह । [N
दिशमेतां सुविपुलां हिमशैलावतंसकाम् ॥७॥

---

१. म—मुहूर्तमपि ।
२. कै अ ल$_1$ म श भ च—शतबलिं ।
रा—हकारो हरिवालिवः ।
३. कै ल$_2$ रा भ—‡हरिराजा तं ।
अ च—†हरिराजानं ।
४. श—†वानरस्य ।
५. कै अ ल$_1$ व म श रा च—कोटीसह० ।
६. अ च—†समप्रियं ।
म—समन्विभिः ।
७. म—प्राप्तेऽपरहस्तेन ।
८. कै अ ल$_1$ ल$_2$ व म भ—सु ।
श—च ।
९. कै अ ल$_1$ ल$_2$ व म श रा च—मार्गध्वं ।
१०. कै अ रा भ च—सार्धं हरिभिः ।
११. म—०कोविदः ।
१२. ल$_1$ व—ततः ।
१३. भ—†दिशमेकां ।
१४. अ च—‡०कृतंसकां ।

N] सर्वतः परिमार्गध्वं राजपुत्रीमनिन्दिताम् । [४
दिश्चमेतां शुचिं दिष्टां कर्तुमर्हथ वानराः । [N
६] विदेहराजदुहितुः कार्ये संसक्तमानसाः ॥८॥ [N
अस्मिन् कार्ये निवृत्ते तु कृते दाशरथेः प्रिये ।
७] ऋणान्मुक्ता भविष्यामः कृतार्था हरिपुङ्गवाः ॥९॥ [५
कृतं हि प्रियमस्माकं राघवेण महात्मना ।
८] तस्य चेव प्रतिकर्ताऽस्मि सफलं जीवितं मम ॥१०॥ [६
एतां बुद्धिं समास्थाय यथा लभत मैथिलीम् ।
९] तथा भवद्भिः कर्तव्यं मम प्रियहितैषिभिः ॥११॥ [८
अयं हि सर्वभावेन संमान्यो हरिपुङ्गवाः ।
१०] अस्मासु च परां प्रीतिं गतः परबलार्दनः ॥१२॥ [९
इमानि देशदुर्गाणि नदीशैलान्तराणि च ।
११] भवन्तः परिमार्गन्तु बुद्धिविक्रमसंमताः ॥१३॥ [१०
तत्र मत्स्यान् पुलिन्दांश्च शूरसेनांस्तथैव च ।
१२] प्रस्थकान् भद्रकांश्चैव कुरूंश्च सह केकयैः ॥१४॥ [११

१. कै रा भ—शुचिं चिहां ।
अ च—शुचिचिहां ( वंग-शुचिचितां ) ।
ल$_1$—शुचिदिष्टां ।
२. भ—प्राप्स्येऽपरहस्तेन ।
३. अ ल$_1$ म च—दाशरथेः प्रि० ।
४. कै रा—राघवेन ।
५. व—राघवः ।
६. अ—स माव्ये ।
म च—स मान्यो ।
ल$_1$—संभाव्यो ।
७. कै ल$_1$, ल$_2$ व म शा—हरिपुंगवः ।
८. म—बलबलार्दनः ।
९. अ भ च—परिमार्गध्वं ।
१०. शा—०क्रमसत्कृताः ।
११. अ च—
तत्र मत्स्याः पुलिंदाश्च शूरसेनास्तथैव च ।
१२. अ—प्रसुवान् ।
च—प्रसुठान् ।
भ—मत्स्यूकान् ।
१३. ल$_2$ रा—भद्रकांश्चैव ।
१४. शा रा—कैकयैः ।

गान्धारान् यवनांश्चीनान् पौरंड्रांश्चैव समोलवान् ।

१३] वाह्लीकानृषिकांश्चैव तथा (?)रामठतङ्गणान् ॥१५॥ [१२

चीर्नान् परमंचीनांश्च तुषारान् वर्व्व(?र्व)रानपि । [१३पू

१४] कटकानस्वलांश्च जालान् काम्भोजानश्वसंवृतान् ॥१६॥

एतानत्यद्भुतान् देशान् सपर्वतनदीगुहान् । [N

१५] अन्विष्य दंरदांश्चैव हिमवन्तं गमिष्यथ ॥१७॥ [१३ ख

रोध्रपद्मकषण्डैश्च देवदारुवनैस्तथा । [१४पू

१६] सालैस्तालैस्तमालैश्च भूर्जैश्च बहुभिर्वृतम् ॥१८॥ [N

किन्नरैश् चारणैः सिद्धैः पिशाचैर् यक्षराक्षसैः ।

१७] अनुकीर्णः स्थितः शैल औत्सृत्य दिशमुत्तराम् ॥१९॥ [N

---

१. के ल, ल, व म श रा—
पाण्डूंश्चैव ।
ख—पाण्ड्रांश्चैव ।

२. के ल, ल, व म श रा—
॰मालवान् ।

३. के रा—॰कङ्गणान् ।
अ ख—रमठ कङ्गणान् ।
ल, —रमठखङ्गणान् ।
श—॰तङ्गणान् ।
ल, व म—॰तद्गुणान् ।

४. ल, ल, व म रा—परचीनांस्तु
तुरुस्तान् ।
के—परमचीनांस्तुरुस्तान् ।
श—परिची॰ ।
ख—परमचीनांश्च ।
( चीनानिति अशः )

५. के ल, ल, व म श रा—
वर्वरान् ।

६. ल, रा—कट्टकानस्तकान् ।
के—कट्टका॰ ।

७. अ ख—
कट्वलानलकाम्काकीम्कांबोजानखसंवृतान् ।
भ—
कट्वलानस्यकालीकाम्कांबोजांखससंवृतान् ।

८. रा—अन्विष्यथ रदांश्चैव ।
ख—॰ष्य दगरांश्चैव ।

९. अ ख—॰पद्मकखंडैश्च ।
भ—लोध्रपद्मकखंडैश्च ।
श—†रोध्रपद्मक॰ ।

१०. अ ख—†भूर्वैश्च ।

११. ल, व—†॰र्वृतां ।

१२. श —पिशाचराक्षसैः ।

१३. अ ख—†आवृता ।
ल, —†आवृत ।

तापसैर् गुह्यकैः सिद्धैः किन्नरैर् मृगपक्षिभिः ।[1]

१८] अनुकीर्णवनः[2] शैल आस्थितः शतयोजनम्[3] ।।२०।। [N

तस्य पर्वतजालेषु कन्दरेषु गुहासु च । [N

१९] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।।[4]२१।। [१४ उ

किरातान् पह्लवान् घोरान् पशुपालान्[5] सुदारुणान्[6] [N

२०] अन्विष्य तां(तान्?)मृगोस्तुङ्गमुपान्तस्थं[7] गमिष्यथ ।।२२।।[N

ततो महाऽऽश्रमं गत्वा देवदानवसेवितम् ।

२१] कालं नाम महाघोरं पर्वतं चैव द्रक्ष्यथ ।।२३।। [१५

तस्मिन् पर्वतशृङ्गेषु वनेषूपवनेषु च ।

२२] अन्वेष्यः सह वैदेह्या रावणो राक्षसाधिपः ।।२४।। [१६

ताम्रागारमतिक्रम्य[8] हिमगर्भं[9] महागिरिम् ।

२३] ततः सुदर्शनं नाम पर्वतं तं गमिष्यथ ।।२५।। [१७

तस्य सर्वेषु शृङ्गेषु प्रियङ्गूणां[10] वनेषु च ।

२४] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।।[11]२६।। [१९

तमतिक्रम्य चाकाशं पर्वतं शतयोजनम् ।

---

१. म शा—नास्ति ।

२. कै ल$_2$ रा—†अनुपर्णवतः ।
अ—† अनुकीर्णवतः ।
ल$_1$ ब म शा—अनुकीर्णः स्थितः ।
च—† अनुसवर्णतः ।

३. कै अ ल$_1$, ल$_2$ ब म शा रा च—शतयोजनात् ।

४. ल$_1$—अतः परं २६श्लोकान्तः पाठो नास्ति ।

५. कै म शा—† ॰पातान् ।
अ ल$_1$, ल$_2$ ब रा च—पशुघातान् ।

६. म—अतः परमधिकः पाठः—
अन्वेष्यः सह वैदेह्या रावणो राक्षसाधिपः ।

७. अ—‡ ॰ङ्गमुपसथं ।
रा—॰ङ्गमुपस्थाने ।
भ—‡ ॰स्तुगंमस्थतुंगं ।

८. भ—ताम्राकार॰ ।

९. ब—हिमवन्तं ।

१०. कै अ ल$_1$, ल$_2$ ब म शा रा च—प्रियङ्गूनां ।

११. म—अतः परमधिकः पाठः—
तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् ।
ततो देवसभं नाम पर्वतं तं गमिष्यथ ॥

२६] पर्वतो हि नदीहंसैः सर्वसत्त्वैर् विवर्जितः ॥२७॥ [२०
N] तत्र घोरतमं देशं गिरिमध्यमनम्भसम् ।
२१पू] समन्ताद् योजनशतं संतप्तं सूर्यरश्मिभिः ॥२८॥ [N
N] न तत्र सिंहा व्याघ्रा वा वर्जितं मृगपक्षिभिः ।
२१ उ] त्वरमाणैः कृताहारैः पीततोयैश्च वानरैः ॥२९॥ [N
तं तु शीघ्रमतिक्रम्य काननं शतयोजनम् ।
२७] अपरं पर्वतं रम्यं कैलासं नाम द्रक्ष्यथ ॥३०॥ [२१
तत्र पाण्डुरमेघाभं जाम्बूनदविभूषितम् ।
२८] कुबेरभवनं दिव्यं निर्मितं विश्वकर्मणा ॥३१॥ [२२
विशाला नलिनी तत्र प्रभूतकमलोत्पला ।
२९] हंस-कारण्डवाकीर्णा मुक्ता-वैडूर्य-वालुका ॥ ३२॥ [२३
तत्र वैश्रवणो राजा सर्वभूतनमस्कृतः ।
३०] धनदो रमते श्रीमान् गुह्यकैः सह राजराट् ॥३३॥ [२४
तस्य चन्द्रनिकाशेषु निर्झरेषु गुहासु च ।
३१] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥३४॥ [२५
तमतिक्रम्य शैलेन्द्रं त्रिशृङ्गं नाम पर्वतम् । [N
४६] तस्य पादे महद् दिव्यं सरः काञ्चनभूषितम् ॥३५॥

---

१. रा—† विवर्जितैः ।
२. अ—ततो ।
३. कै म—सिंहव्याघ्रा ।
४. म—† त्वरमाणकृतहारैः ।
५. ल$_2$—‡ पीतपेयैः ।
ल$_1$—पीतं तोयैश्च ।
६. कै अ ल$_1$, ल$_2$ व म श रा च—काननं ।
७. कै ल$_1$, ल$_2$ व म श रा—रम्यं ।
८. अ रा—विशालकनकी ।
९. भ—यत्र ।
१०. भ—प्राप्तेऽपरहस्तेन ।
११. श—‡ रमति ।
१२. ल$_1$, ल$_2$ व श रा—गुह्यकः ।
म—‡ गुह्यक ।

तस्मात् प्रवर्त्तते दिव्या शीघ्रस्रोतास्तरङ्गिणी ।
४७] नदी नागह्रदाकीर्णा सरयूर् लोकभाविनी ॥३६॥ [N
तस्यैकं काञ्चनं शृङ्गं पर्वतस्याग्निसंनिभम् ।
४८] वैडूर्यमयमेकं च श्वेतमेकं च राजतम् ॥३७॥ [N
अनुत्पन्नेषु भूतेषु बभूव किल भौवनः ।
४९] अग्रजः सर्वभूतानां विश्वकर्मेति नामतः ॥३८॥ [N
तस्य तत् किल पौराणमग्निहोत्रं महात्मनः ।
५०] आसीदग्निशिखरः शैलो विहितस्तत्र योगतः ॥३९॥ [N
तत्र सर्वाणि भूतानि संर्वमेधैर् महात्मनः ।
५१] उद्भूतश्च महादेवः सर्वभूतमहेश्वरः ॥४०॥ [N
रुद्रस्य किल पौराणं तत् सरः सुरमेधिकम् ।
५२] ततः प्रसन्नसलिला प्रवृत्ता कुटिला नदी ॥४१॥ [N
देव–दानव–गन्धर्व–पिशाच–पन्नगोरगाः ।

---

१. ल$_1$ ब—प्रवर्तते ।
२. भ रा भ च—‡ शीघ्रस्रोता तरङ्गिणी ।
३. कै—०लोकविभाविनी ।
४. कै—०संभवं ।
५. बै—‡ भौवनः । ल$_1$—† भावनः ।
६. कै ल$_1$ म श अ—पौरस्त्य० ।
७. कै ल$_1$ ल$_2$ ब म ध रा—अग्निशिखरः । ‡ अ—आसीद्भ्रिशिखरः ।
च—‡ आसीद्विशिखः ।
८. अ—†० हितास्ते प्रयोगमः ।
च—०हितास्ते प्रयो ‡ मयः ।
भ—० † हितास्ते प्रयाग्नयः ।
९. कै ल$_2$ ब म श—
तत्र सर्वाभिभूतानि ।
ल$_1$—† सर्वे तत्र विभूतानि ।
१०. अ—‡ सरमेधे म० ।
भ—‡ सरमेधैर्म० ।
च—† सर्वमेधा म० ।
११. भ—अनुभूतो ।
१२. कै ल$_1$ म श—पौराणां ।
१३. अ—† सरमेधिकं ।
कै च—‡ सरमेधिकं ।

५३] धर्षयन्ति न तं शैलं प्रदीप्तमिव पावकम् ॥४२॥ [N
तत्र पर्वतशृङ्गेषु नदीषु च गुहासु च ।
५४] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥४३॥ [N
५४पू] तमतिक्रम्य शैलेन्द्रं महादेवेन पालितम् ।
N] क्रौञ्चं नाम गिरिं रम्यं गता द्रक्ष्यथ वानराः ॥४४॥ [N
[1]क्रौञ्चं तु गिरिमासाद्य बिलं[2] तस्य गिरेर्महत् ।
१२] दुष्प्रवेशं दुराधर्षं सिद्धचारणसेवितम् ॥४५॥ [२६
वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ।
१३] देवैरभ्यर्चिताः शश्वद् देवतुल्या महर्षयः ॥४६॥ [२७
तांश्च सानुगुहाः सर्वाः सानवः शिखराणि च ।
१४] निर्भराश्च नितम्बाश्च मार्गितव्यास्ततस्ततः ॥४७॥ [२८
क्रौञ्चस्य शिखरं चापि निरीक्षध्वं समन्ततः ।
१५] सहेक्षकं संशैलं च मानसं विहगालयम् ॥४८॥ [२९
न गतिस्तत्र भूतानां देवदानवरक्षसाम् ।
१६] तस्माभिरीक्षितव्यः स पर्वतश्च समानसः ॥४९॥ [३०

---

१. रा—क्रौंचं ।
२. च—बिलमासाद्य ।
३. कै—† बलिं ।
४. अ —‡ ० तुल्यः महर्षयन् ।
म—०महर्षिभिः ।
ल१—‡ महर्षयन् ।
५. कै—ते च सानु० ।
भ—क्रौंचसानुगु० ।
ल१—‡ ताश्च सानुमहाः ।
अ च—ते च सानुगुहा ।
म—तांश्चसानुगु० ।
६. अ च—† सर्वा ।
७. म—क्रौंचं सशिखरं ।
८. अ म च—सवृक्षं कामशैलं ।
९. कै ल२च म श रा—†गन्तानिस्त० ।
ल१—‡ गन्ताक्षिस्त० ।
च—‡ गानिस्त० ।
१०. कै अ रा भ च—
पर्वतश्चैव मानसः ।

५१पू] तमतिक्रम्य शैलेन्द्रं सिद्धचारणसेवितम् ।[1]
५४ उ] योजनानि चतुःषष्टिः पर्वतो गन्धमादनः ॥[2]५०॥ [N
तालि[3]शैश्च वराङ्गै[4]श्च तमालैश्चोप[5]शोभितः ॥५१॥ [N
५५] पुष्पितोपवनः श्रीमान् सि[6]द्धचारणसेवितः ।
N] योजनानि चतुःषष्टिरसितागुरुभूषि[7]तः ॥५२॥ [N
[8]शृङ्गे तस्य स्थिता जम्बू [9]दिव्यनाम्ना सुदर्शना ।
५६] जातरूपमयी दिव्या विराजति सवेदिका ॥५३[10]॥ [N
जम्बूद्वीपस्य सा जम्बू[11]र् ध्वजो वानरपुंगवाः ।
५७] अर्चिता चोपगीता च नित्यमप्सरसां गणैः ॥५४॥ [N
तत्र चित्रेषु रम्येषु वने[12]षु च[13] सुगन्धिषु ।
N] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥५५॥ [N
मैना[13]कस्य विचेतव्यः सानुमस्थः स[14]कन्दरः ।
१८] स्त्रीणामश्व[15]मुखीनां च निकेतास्तत्र तत्र वै ॥५६॥ [१२

---

१. म—
तमतिक्रम्य शैलेन्द्रं मैनाको नाम पर्वतः ।
मयस्य भवनं तत्र दानवस्य स्वयं कृतं ॥
२. ध रा—नास्ति ।
३. कै ल₂ ब म ध रा म च—
तोलिशैश्च ।
ल₁—तौलिशैश्च ।
४. ल₂—+ वरांगश्च ।
५. कै ल₁ ल₂ ब म ध रा—
०श्चोपशोभितम् ।
६. अ—'सिद्ध' इत्यारभ्य '०सिता' 'गु०' इत्यन्तः पाठो नास्ति ।
ल₁—सिद्धवानरसेवितः ।
७. ल₁—०गुरुभूषिता ।
८. रा—+ शृंगं ।
९. कै अ ल₂ ब म श रा च—
जंबूर्दिव्य० ।
१०. म—नास्ति ।
११. कै—+ जंबू० जो ।
म—+ जंबू ध्वजो ।
च—+ जम्बू ध्वजो ।
१२. म—काननेषु ।
च—+ वानरेषु ।
१३. कै अ ल₁ ल₂ म श रा म च—
मैनाकश्च ।
१४. कै ल₁ ल₂ ब म ध—सकंदरः ।
१५. श - ० णामश्वमु० ।

तत्राश्रमपदं रम्यमृषीणामूर्ध्वरेतसाम् ।
३९] दीप्तं सप्तर्षिचरितं धर्मैककृतनिश्चयम् ॥५७॥ [N
आश्रमं तमतिक्रम्य शैलं बहुफलोदकम् ।
४०] सिद्धा वैखानसा यत्र बालखिल्याश्च तापसाः ॥५८॥ [३३
वन्द्यास्ते तापसाः सिद्धास्तपसा निस्तमोरजाः ।
४१] प्रष्टव्या चैव सीतायाः प्रवृत्तिर् विजयोत्तरैः ॥५९॥ [३४
हेमपुष्करसंच्छन्नं नानापक्षिगणायुतम् ।
४२] तरुणादित्यसंकाशैर् हेमहंसैः समाकुलम् ॥६०॥ [३५
औपवाह्यं कुवेरस्य सार्वभौम इति श्रुतः ।
४३] गजैः पर्यास्थितं दिव्यैः सदा सह करेणुभिः ॥६१॥ [३६
तत् सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् ।
४४] अनक्षत्रग्रहं व्योम निर्मेघघनराजितम् ॥६२॥ [३७
गभस्तय इवार्कस्य स तु देशः प्रकाशते ।
४५] भ्राम्यद्भिस्तापसैः सिद्धैर् देवकल्पैः स्वयम्प्रभैः ॥६३॥ [३८
तमतिक्रम्य शैलेन्द्रं देवदानवसेवितम् [15] ।

---

१. अ रा भ च—तदाश्रम० ।
२. अ च—† धर्मैकाकृत० ।
३. रा—सिद्धवैखा० ।
४. कै ल, ल, ब म श—नाम ।
५. ल,—‡ विस्तमोरजः ।
ल,—‡ निस्तमोरजा ।
म—† निस्तमोरूजः ।
रा—निस्तमीमया: ।
६. ल,—† प्रवृत्ता ।
७. कै अ रा—‡ सर्वभौम० ।
८. ल, ब—† श्रुवेः ।
९. म—गजाः ।
१०. म - ‡ पर्यन्वि ।
११. अ रा भ च—दिव्यं ।
१२. कै भ —० गृहव्योम ।
अ शा च—० ग्रहव्योम ।
१३. कै ल, ल, ब म श रा—
निर्मेघघनरा० ।
१४. ब—स्वयंप्रभोः ।
१५. म—अतः परमधिकः पाठः—
योजनानि चतुःषष्टिः पर्वतो गंधमादनः ।
शाकैस्तालैस्तमालैश्च सरलैश्चोपशोभितः ॥
शृंगे तस्य स्थिता जम्बू नाम्ना दिव्या सुदर्शना
तमतिक्रम्य शैलेंद्रं देवदानवसेवितं ॥
पुनः पाठः सु० ३६, ५०–५१

५९] तुषारचयसंकाशो मन्दरो नाम पर्वतः ॥६४॥ [N
६०पू] शृङ्गे तस्य ह्रदो दिव्यः प्रसन्नसलिलाशयः ।
N] पुष्पितोपवनः श्रीमांश्चामीकरविभूषितः ॥६५॥ [N
६० उ] विश्रुतो धृतमण्डोदः पितामहनिषेवितः ।
तस्मिन् पतति सा दिव्या रम्या त्रिपथगा नदी ॥६६॥ [N
६१] आकाशगङ्गा दुर्धर्षा नभः शब्देन पूरयन् (?) ।
सा धारा पाण्डुरा दिव्या सलिलस्य नभश्च्युता ॥६७॥[N
६२] तस्मिन् परमदुर्धर्षा सा चातिसरसा नदी ।
६४ उ] तामिन्द्रमार्गां दुर्धर्षां प्रवदन्ति महर्षयः ॥६८॥ [N
सा नदी कौशिकी पुण्या सा च वैतरणी नदी ।
६५] लोहितोदा महावेगा केशमज्जाऽऽदिवालुका ॥६९॥ [N
तत्र यक्षाः सगन्धर्वाः पिशाचपतगोरगाः ।
६६] विमुञ्चन्त्यवशा देहं कालस्य वशमागताः ॥७०॥ [N
तस्मिंस्तेषां शरीराणि दृश्यन्ते न तथा क्षितौ ।
६७] यथा मृतानां दृश्यन्ते मानुषाणां प्लवंगमाः ॥७१॥ [N

---

१. म—+ तुषारचलसं० ।
२. रा—'दुर्धर्षा' इत्यारभ्य 'इन्द्रमार्गां' इत्यन्तः पाठो नास्ति ।
३. ल१—पूरयत् ।
च—पूरयान् ।
४. कै ल१ ल२ ब म श रा च—धीरा।
५. ल१ ल२ ब म श—दिव्यसलिला।
६. अ—० विसुरसा ।
७. म—
तस्मिन् परमदुर्धर्षा महानादा महाह्रदे ।
तस्मिन्निपतिता गंगा गौरीकांचनसंचया ॥
प्रवहत्यतिवेगा सा शिलाश्च समन्ततः ।
सा गंगा सा च दुर्धर्षा सा भाति सुरसा नदी॥
८. म—नास्ति ।
९. कै ल२ ब म श रा—कोकोदका ।
ल१—कोकोदका ।
च—+ कोकोदका ।
१०. ल१—+ ०पतगोरथाः ।
म म श—पिशाचाः पतगोरगाः
११. म—तस्मिंस्तेष ।

तमतिक्रम्य शैलेन्द्रं मन्दरं मुनिभिर्वृतम् ।[1]
६८] उत्तरं तीरमासाद्य समाश्वसितुमर्हथ ॥७२॥ [N
तीरे तस्य महाशैलः[2] सहस्रशिखरावृतः[3] ।
७०] काञ्चनः सूर्यसंकाशो बहुकेतुरिति श्रुतः ॥७३॥ [N
तस्योपरि शुचिर् दिव्यः प्रसन्नसलिलो ह्रदः ।
७१] महच्चरोवर्णं[4] चैव काञ्चनं संगमिष्यथ ॥७४॥ [N
तस्मिन् शरवणे[5] दिव्ये[6] नित्यं[7] दीप्ते च[8] काञ्चने ।
७२] जातो यत्र महासेनः कार्तिकेय इति श्रुतः ॥७५॥ [N
अनन्तः कपिलो यत्र समीपे सलिलायुते ।
७३] उन्मज्जति[9] महाघोरो यस्मिन् हयशिरा[10] महान् ॥७६॥ [N
तस्य पर्वतपृष्ठेषु निर्झरेषु गुहासु च ।
७४] सिद्धचारणजुष्टेषु[11] पुष्पितेषु वनेषु च ॥७७॥ [N
आश्रमेषु च रम्येषु लतानां गहनेषु च ।
७५] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥७८॥ [N
तं तु शैलमतिक्रम्य शैलोदा[12] नाम निम्नगा । [३९
७६] उभयोस्तीरयोर् यस्याः के(?कै)चका[13] नाम वेणवः ॥७९॥
७९पू] ते[14] नयन्ति[15] परं पारं शीघ्रं प्रत्यानयन्ति च । [४०

---

१. अ—अतः परमधिकः पाठः—
उत्तरं रत्नसंपूर्णं समुद्रं गन्तुमर्हथ ।
तं कालमेघप्रतिमं महोरगनिषेवितम् ॥
२. अ—महाशैलः ।
३. ल,—सहस्रशिरसावृतः ।
४. कै अ ल, ल, व म श च—सद्वनं ।
५. कै अ ल, ल, व म श रा च—शरवणे ।
६. कै अ ल, ल, व रा भ च—चैव ।
७. भ—नित्यं दीप्ते च ।
रा—०नित्यदीप्तेऽथ ।
८. भ—‡स्यरमंतत: ।
९. श—†उन्मज्जति ।
१०. अ—‡हयशिरो महान् ।
११. अ च—०रणसंघेषु ।
१२. ल,—शैलूषा ।
१३. अ ल, ल, व म श रा भ च—कीचका ।
१४. म च—तेन यान्ति ।

सा न शक्या नदी तर्तुं पुण्या परमदुर्गमा ॥८०॥

७७] तस्याः स्पृष्ट्वा तु सलिलं सर्वः शैलोऽभिजायते ।

ते तु तीरगतास्तस्या महाकीचकवेणवः ॥८१॥ [N

७८] समागच्छन्त्यसङ्गेन नै संगत्यौ परस्परम् ।

N] ते नयन्ति परं पारं पुनः प्रत्यानयन्ति च ॥८२॥ [N

७९ उ] तां नदीं दूरपर्यंतां तैः सन्तरणवेणुभिः ।

N] लङ्घयित्वा ततस्तां तु नदीं कीचकवेणुभिः॥८३॥ [N

नदीं शीतां महावेगां द्रक्ष्यथाद्भुतदर्शनाम् ।

८०] तस्यां स्नात्वा शुचिर् भूत्वा ततो यान्तु समाप्लुताः ॥८४॥[N

N] उत्तराः कुरवो यत्र नानागुणसमावृताः । [४१

८१ उ] तान् गच्छथ हरिश्रेष्ठा विशालानुत्तरान् कुरून् ॥८५॥ [N

दानशीलान् महावेगान् नित्यहृष्टान् गतज्वरान् ।

८३] न तत्र शीतमुष्णं वा न जरा नामयोऽपि च ॥८६॥ [N

८४पू] न शोको न रुजा किंचिन् न भयं नै चै तस्कराः ।

८५ उ] भूमिः ससिकता पाण्डुः समा निस्तृणकण्टका ॥८७॥ [N

८६पू] निरुद्वेगा गताबाधा क्वचिच्च मृदुशाद्वला ।

८४ उ] सर्वकामफलैर् वृक्षैः पुष्पितैरुपशोभिता ॥८८॥ [N

---

१. कै—महाकेचक० ।

२. ल२ ब—‡नमस्कृत्वा ।

म—व संगत्वा ।

रा‡—संगत्वा ।

३. अ च—शेन यांति ।

४. कै—‡केचककेषु० ।

अ म च—कांचनवेणु० ।

५. ल१ ल२ ब म श—नाधि ।

६. अ ब रा भ च—सकिकेन ।

७. रा—†गतज्वरान् ।

८. अ भ च—‡रुजं ।

९. कै ल१ ल२ ब म श रा—तस्य ।

१०. कै—‡निरुद्वेगा ।

११. कै—‡पाण्डुका ।

८६पू] शोभिता काञ्चनैश्चापि पक्षिसंघैः समन्ततः ।
८७ उ] तप्तकाञ्चनपद्माभिः पद्मिनीभिः कृतोदका ॥८९॥
नीलवैडूर्यपर्यन्ता नीलोत्पलवनानि च । [४२
८९] रक्तोत्पलमयैश्चापि मणिदण्डैर् हिरण्मयैः ॥९०॥ [४३पू
८८ उ] हेमकिञ्जल्कवर्णानि सुगन्धीनि क्वचित् क्वचित् ।[4]
शोभनास्तत्र गन्धाढ्या नलिन्यः फुल्लपङ्कजाः ॥९१॥ [N
९०] महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः । [४०उ
९१पू] नीलोत्पलवनैर् दिव्यैः सहस्रैः सर्वतो वृताः॥[5]९२॥ [४४
८६ उ] मणिरत्नावकीर्णाश्च नद्यः काञ्चनवालुकाः ॥[8]९३॥ [N
८७पू] तत्र हेमह्रदाश्छन्ना विविधा मणिपर्वतैः ॥९४॥ [N
९२उ] सुवर्णगिरयश्चात्र मणिरत्नशिलोच्चयाः ।
९३पू] सर्वरत्नमया भान्ति काञ्चनैस्तरुभिर्वृताः ॥९५ [N
९३उ] निर्मलाभिश्च मुक्ताभिर् मणिभिश्च महाधनैः ।
९२पू] उद्धृता निर्मलास्तत्र निम्नगाः पुलिनोपगाः ॥९६॥ [४५
N] सर्वरत्नमयैः शृङ्गैरवगाढैः शिलोच्चयैः ।
९६उ] जातरूपमयैश्चापि हुताशनसमप्रभैः ॥९७॥ [४६

---

१. कै ङ$_{1}$ ङ$_{2}$ व म श— काञ्चने राजतैश्चापि ।
रा—,, रजतैश्चापि ।
२. कै ङ$_{1}$ ङ$_{2}$ व म—।कृतोदकाः।
३. म—‡सुरभीणि ।
४. रा—नास्ति ।
५. अ च—†वृताः ।
६. ङ$_{1}$—नास्ति ।
७. ङ$_{1}$—वालुकाः ।
८. ङ$_{2}$—नास्ति ।
९. ल$_{1}$ म श—ते तु ।
१० कै ल$_{1}$ म श रा भ च—†हेमह्रदच्छन्ना ।
व रा—‡हेमह्रदा छन्ना ।
११. अ—०विविधा ।
च—‡ विविधा ।
१२. अ भ च—सर्वरत्नमयैर् ।
१३. अ च—†०वृताः ।
१४. अ भ च—उद्भूता ।
१५. श—पुलिनापगाः ।

९३ उ] नित्यपुष्पफलाश्चात्र पादपा वै मधुश्च्युतः । [४७पू
९७पू ] नानावर्णानि वासांसि फलन्त्यन्ये नगोत्तमाः ॥९८॥ [४८
N] मुक्तावैडूर्यचित्राणि भूषणानि च पादपाः । [४९पू
दिव्यगन्धसमस्पर्शाः सर्वकामफलप्रदाः ॥९९॥ [५० उ
९४] सप्तर्षीणां स्थितिर्यत्र यत्र मन्दाकिनी नदी ।
देवर्षिचरितं रम्यं यत्र चैत्ररथं वनम् ॥१००॥ [N
९५] तत्र क्षीरवहा नद्यः सदा पायसकर्दमाः ।
९६पू ] ब्रह्मणा विहितास् तत्र नगाः पुष्पफलान्विताः ॥१०१॥ [N
चित्रसान्तानिकैर् माल्यैः पङ्कजैश्च कुशेशयैः ।
N] काञ्चनैर् मणिदण्डैश्च शोभितांश्च नलैः शुभैः ॥१०२॥ [N
१००उ] पानानि च महाऽर्हाणि भक्ष्याणि विविधानि च । [५१ उ
१०१उ] स्त्रियः सुरूपसंपन्नास् तथा यौवनदर्पिताः ॥१०३॥
गन्धर्वाः किन्नराः सर्पा नागा विद्याधरास्तथा । [५२पू
१०२] रमन्ते सहितास्ताभिर् नारीभिस्तत्र तत्र वै ॥१०४॥ [५३ उ
वियोगेन न युज्यन्ते संसक्तचित्ताः परस्पर ।
N] ताः स्त्रियः पुरुषाश्चैव विधिं पश्यत यादृशम् ॥ १०५॥[N

---

१. कै अ रा च —] मधुश्च्युताः ।
ल२— ] मधुः च्युतैः ।
२. ल२— ] फलन्त्येव नगोत्तमैः ।
ब म श च— फलन्त्येव न० ।
३. ब— महर्षीणां ।
४. कै ल१, ल२ ब म श रा— ] स्थिता ।
५. म— ] ब्राह्मणा ।
६. कै रा— ] संतानिकैः ।
७. अ च— कुशेशयः ।
८. अ म च— शोभिता नलैः ।
९. कै अ ल१, ल२ ब रा म च— स्वरूपसं० ।
ब— स्वेति प्रमादर्भ 'सु' इति पश्चाद्विवेचितः ।
१०. अ च— यौवनदर्पिताः ।
११. ब म श— ] नागा ।
१२. ल१ रा— ] सक्तचित्ताः ।
१३. कै— पश्येत ।
१४. ल२— नास्ति ।

तत्र पादपशाखासु प्रभवन्ति परस्परम् [1]।
१०३] कान्तिमत्यः शुभा नार्यः सर्वाभरणभूषिताः ॥१०६॥ [N
पुरुषाश्चोत्तमाकारा रूपवन्तो महौजसः ।
१०४ ] न द्रक्ष्यन्ति भयं तत्र मधुराः प्रियवादिनः ॥१०७॥ [N
सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ।
१०५ ] सर्वे कामसमृद्धार्था वसन्ति सहयोषितः ॥१०८॥ [५३
१०६पू ] गीतवादित्रनिर्घोषाः सोत्कृष्टनिनदस्वनाः ।
N] श्रूयन्ते सततं तत्र सर्वभूतमनोहराः ॥१०९॥ [५४
N] न तत्र क्षुधितः कश्चिन्न च कश्चिदसत्क्रियः ।
N] अहन्यहनि कुर्वन्ति गुणांस्तत्र मनोहरान् ॥११०॥ [५५
अह्ना तासां तु सर्वासां यौवनं व्यतिवर्तते ।
१०९ ] अह्ना सूर्योदये जाताः पतन्ति दिवसक्षये ॥१११॥ [N
अभिशप्ता महेन्द्रेण ताः किलाप्सरसस्तथा ।
११५ ] अहन्यहनि जायन्ते म्रियन्ते च पुनः पुनः ॥११२॥ [N
तत्रानुरूपाः कल्याण्यो रूपयौवनचेष्टितैः ।
१०७] स्त्रियः परमरूपाढ्या रुचिराननलोचनाः ॥११३॥ [N

---

१. ल$_2$—नास्ति ।
२. म—‡वं प्रभव् ।
३. अ रा च—‡ पुकृतक० ।
ल$_1$ ल$_2$ ब म श-च कृतक० ।
४. अ च—सर्वकामस० ।
रा—०सुबद्धार्था ।
५. म—‡सत्कृष्ट० ।
६. अ म च—कश्चिद्व्याधि ।
७. ब—‡सुरोदये ।
८. अ म च—जीर्णा ।
कै रा—क्षीर्णा ।
९. अ—कल्याणा ।
रा—कल्याण्या ।
१०. कै ल$_1$, ल$_2$ ब म श रा·
परस्पराख्याख्या ।

१०८पू] सर्वाभरणसंपन्नाः सर्वा मधुरनिस्वनाः ।
११०उ] अचिन्तयित्वा देवेशं तत्र क्रीडन्ति संघशः॥११४॥ [N
तस्य देशस्य रम्यत्वाच् छक्रोपस्थानविस्मृताः ।
१११] ताः शशाप महातेजा महेन्द्रः पाकशासनः ॥११५॥ [N
जरामरणदुःखार्ताः का(?क)ल्पं का(?क)ल्पमतन्द्रिताः ।
११२] सर्वा भवन्तु दुर्मेधा अस्मिन्नेव गुहामुखे ॥११६॥ [N
इति शापहतास्तास्तु शक्रस्य परमाः स्त्रियः ।
११३] अशून्यां कुर्वते नित्यं तां गुहां तिमिरावृतीम् ॥११७॥ [N
गुहायां तिमिरावृत्यां गुहाः सन्ति सहस्रशः ।
११५] पार्श्वे त्वन्यगुहा भीमाः शिलागृहगणास्तथा ॥११८॥ [N
११६पू] सीता तत्र विचेतव्या यत्नवद्भिः समाहितैः । [५६
११७पू] कुरूंस्तान् समतिक्रम्य भीमगम्भीरनिस्वनाः ॥११९॥[N
१०६उ] अपावृत्त्वा बृहद्वृक्षैर् गुहाः पन्नगसेविताः ।
N] अतीत्य च महान् यत्नैः कर्तव्यो मार्गणो पुनः ॥१२०॥[N
N] समतिक्रम्य देशं तमुत्तरं तोयसेवितम् ।
११७उ] तत्र सोमगिरिर् नाम मध्ये सोममयो महान् ॥१२१॥

---

१. ल$_2$— तत्राक्रीडन्ति ।
य—‡ तत्राक्रीडन्त ।
२. भ—कल्पं कल्पम॰ ।
३. भ—भवत ।
४. भ—दुर्मेधास्ता अस्मिन् ।
५. भ—शक्रस्यावज्ञया ।
६. ल$_2$ ब म श रा—† कुरुते ।
७. कै—शिवागृह॰ ।
८. ल$_1$, ल$_2$ ब म श—अपावृत्तैर् ।
९. कै—महद्वृक्षैर् ।
ल$_1$, ल$_2$ ब म श—महावृक्षैर् ।
१०. अ भ च रा—पन्नगसे॰ ।
कै—‡ पनग॰ ।
११. कै ल$_1$, ल$_2$ ब म श—अतीव ।
१२. अ ल$_1$ श—महाबल: ।
१३. ल$_1$—तं देशमुच॰ ।
कै—† तां देशमु॰ ।
१४. कै ल$_1$, ल$_2$ ब म श रा—
मणिसोममयो ।

इन्द्रलोकगताः पुण्या ब्रह्मलोकगताश्च ये । [५७पू
११८ ] देवास् तमभिरक्षन्ति[1] गिरिराजं दिवङ्गमम् ॥१२२॥ [५७ ड
स तु देशो विसूर्योऽपि[2] तस्य भासा प्रकाशते ।
११९ ] एषामङ्कस्य लक्ष्म्या च तेजसा च विवस्वतः ॥१२३॥ [५८
भगवांस्तत्र भूतात्मा स्थाणुरेकादशात्मकः । [५९पू
१२० ] वसते ब्रह्मणः पुत्रो मनुश्च परमोऽव्ययः ॥१२४॥ [N
आदौ सृजति भूतानि कालं चैवं चतुर्विधम् ।
N] सर्वलोकनिमित्तं च मनोहारि तदाश्रमम् ॥१२५॥ [N
N] स तु सोमगिरिर् दिव्यो न त्वासाद्यः कथंचन । [N
न कथंचन गन्तव्यं कुरूणामुत्तरेण च ॥[9][10] १२६॥
१२१ ] अन्येषामपि भूतानां न तत्र क्रमते गतिः । [६०
स हि सोमगिरिर् नाम देवदानवदुर्गमः ॥१२७॥
१२२ ] तमालोक्य ततः क्षिप्रं रावणश्चानुमृग्यताम् । [६१
१२३पू ] तस्य शैलस्य पार्श्वेषु नोपविशेयात् कथंचन ॥१२८॥ [N
उद्यानेषु च रम्येषु गन्धर्वभवनेषु च ।
१२४ ] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥१२९॥ [N

---

१. भ रा म च—समभिरक्षन्ति ।
ळ$_1$ ळ$_2$ च म श—तं च प्ररक्षन्ति ।
२. ळ$_1$—॰र्यो हि ।
३. ळ$_1$—† एषा सङ्गस्य ।
४. रा—स्थाणुरेव दशा॰ ।
५. भ च—वसन्ति ।
म—वसति ।
६. म—देवचतुर्वि॰ ।
७. म—तत्र ।
८. कै भ—त्वभ्यासाद्य ।
म ळ$_1$ च—‡ नभ्यासाद्य ।
ळ$_2$ श रा—नत्वासाद्य ।
म—‡ नभ्यासाद्यः ।
९. कै—कथं न च ।
१०. च—नास्ति ।
११. कै—क्रमतो ।
१२. रा—रावणश्चात्र मृ॰ ।
१३. म—ततस्तस्य च ।
१४. भ—नोपविश्य ।
भ—नोपविशत् ।
च—नोपविशत् ।

शिंखास्थानं ततो गत्वा सर्वकामसमान्वितम् ।
N] राक्षसीं तां समालोक्य सहोलूखलमेखलाम् ॥१३०॥ [N
१२५पू] अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
N] एकरात्रमुषित्वा तु मासेनैवागमिष्यथ ॥१३१॥ [N
१२७पू] सर्वमेतद् विचेतव्यं मया यद् यत् प्रकीर्तितम् । [६१पू
१२१उ] कान्तारेषु च दुर्गेषु वनेषु गहनेषु च ।
१२७उ] यदन्यदपि नैवोक्तं तत्रापि क्रियतां मतिः ॥१३२॥ [N
N] मासं कृत्वा हृदिस्थं तु शीघ्रमागन्तुमर्हथ । [N
१२९उ] ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम ॥१३३॥
एतावद् वानरैः शक्यं गन्तुं वानरपुंगवाः ।
१२६] अभास्करममर्यादं नाभिजानाम्यतः परम् ॥१३४॥ [६२
ततः कृते दाशरथेर् महत्प्रिये
महत्तरं चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनलानिलोपमा
१२८ ] विदेहजादर्शनजेन कर्मणा ॥१३५॥ [६४

---

१. अ भ च—शशिस्थानं ।
२. कै ल$_{1}$—गतं । च—गतां ।
ल$_{2}$ व म श रा—च तं ।
३. ल$_{1}$ म—महोलूखल० ।
कै—०मेखला । म—०मेखलं ।
४. ल$_{1}$—अभिगम्य ।
५. कै ल$_{2}$ व म श रा—तु ।
६. रा—एकरात्रिमु० ।
७. अ भ च—च ।
८. अ च—†चो यत् ।
म—चो यत् ।
९. अ ल$_{2}$ व रा म च—घोरेषु ।
१०. कै अ ल$_{1}$ ल$_{2}$ व म श रा च—क्रियते ।
११. रा—आभास्करमम० ।
१२. म—वापि ।
१३. म श—महत् ।
१४. म—०त्यनकाधिकोपमा० ।
म—† ०त्यनिकोनिकोपमा० ।

ततः कृतार्थाः सहिताः सबान्धवा
मयाऽर्चिताः सर्वगुणैर् मनोहराः ।
चरिष्यथेह प्रतिशान्तशत्रवः
१२९ ] सपुत्रदारा धरणीं सनिम्नगाम् ॥१३६॥ [६५
तथेति चोक्त्वा हरिपुंगवास्ते
रामं ससुग्रीवमनन्तवीर्यम् ।
शिरोभिरानम्य गुणान् प्रशंस्य
१३० ] जग्मुर्दिशं वैश्रवणाभिरक्षिताम् ॥१३७॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे उत्तरदिग्वर्णनं नाम
षट्त्रिंशः सर्गः ॥३६॥

---

१. कै म ल₁ ल₂ व म श रा च—मनोहरैः ।
२. कै म ल₁ ल₂ व श रा च—चोक्त्वा ।
म—‡ चेत्त्वा ।
३. ल₂ व म श—किंकिता ।
ल₁ म च—नास्ति ।
४. अ म च—दिग्विजये उत्तर० ।

अनुशिष्टास्तु ते सर्वे राज्ञा वानरयूथपाः ।
७] स्वां स्वां दिशमभिप्रेत्य संहिताः संप्रतस्थिरे ॥१॥ [८
नदन्तश्चोन्नदन्तश्च प्लवन्तश्च प्लवंगमाः ।
८] क्ष्वेडन्तो धावमानाश्च प्रययुस्ते महाजवाः ॥२॥ [९
९पू] आनेष्यामो वयं सीतामपि मृत्युमुखाद् द्रुतम् ।
प्रतिज्ञां चक्रिरे वीराः प्लवमाना महौजसः ॥३॥ [N
१०] अहमेको हनिष्यामि रावणं रणमाहवे ।
तं तथोन्मथ्य तरसाऽऽहरिष्ये जनकात्मजाम् ॥४॥ [१०
११] किं वा श्रमेण महता भवद्भिः श्रूयतामिदम् ।
अहमेवानयिष्यामि पातालादपि मैथिलीम् ॥५॥ [११
१२] विदलिष्याम्यहं वृक्षांश्चूर्णयिष्यामि पर्वतान् ।
वसुधां दारयिष्यामि क्षोभयिष्यामि सागरम् ॥६॥ [१२
१३] योजनानां विंशतिभिः प्लवित्वा नात्र संशयः ।
N] अहमद्य गमिष्यामि योजनानां शतं द्रुतम् ॥७॥ [१३

---

१. कै अ ल₂ ब म शा रा च—सहिताः।
२. शा—० ञानदंतश्च ।
३. अ म च—गर्जन्तश्च ।
४. शा—महामदाः (हस्वपरहस्तेन)
५. कै—‡आनिष्यामो ।
६. म—मृत्युपथोवृतां ।
७. कै ब म—† हनिष्ये ।
८. म—सहसा ।
९. कै—‡ श्रेयता० ।
शा—श्रूयतां शुभं ।
१०. कै अ रा म च—विभ्रमिष्यामि।
११. अ म च—पाठयिष्यामि ।
१२. कै अ रा म च—धारयिष्यामि
१३. रा म—शोषयिष्यामि ।
च—क्षोभयामि च ।
१४. अ भ—सागराम् ।
ल₁—नास्ति ।
१५. म—विंशतीनां ।
१६. कै अ रा च—प्लवत्वाकाश ।
म—‡प्लावित्वा ।
१७. ल₂—नास्ति ।
१८. कै ल₁ ल₂ ब म शा रा—
शतं । च—नास्ति ।

अबुद्धिर् वानरपतिर् यः प्रेषयति वानरान् ।
१४] अहमेको गमिष्यामि कार्यस्यैतस्य साधकः ॥ ८ ॥ [N
भूतले सर्पर्वचैव शैलेषु च सरःसु च ।
१५] पातालस्यापि मध्ये तु गति में न विहन्यते ॥ ९ ॥ [१४
इति चैकैकशस्ते वै वानरा बलदर्पिताः ।
१६] ऊचुस्ते वचनं तस्य हरिराजस्य संगताः ॥ १० ॥ [१५
एवमुक्त्वा तु हरयः स्वां स्वां दिशमुपागताः ।
१७] तदा जग्मुर् महात्मानो गन्तुकामा दिशो दश ॥ ११ ॥ [N
तदुग्रं शासनं भर्तुर् विज्ञाय हरिपुंगवाः ।
१८] शलभा इव संच्छेद्या मेदिनीं संप्रतस्थिरे ॥ १२ ॥ [२
रामः प्रस्रवणे तस्मिन् न्यवसत् सहलक्ष्मणः ।
१९] प्रतीक्षमाणस्तं मासं सीताऽधिगमने धृतः ॥१३॥ [३
गतेषु तेषु सर्वेषु रामः सुग्रीवमब्रवीत् ।
४६.१] कथं भवान् विजानीते पृथिव्या मण्डलं महत्॥[12] १४॥ [४६.१
सुग्रीवस्तु ततो राममिदं वचनमब्रवीत् ।
२] श्रूयतां सर्वमाख्यास्ये विस्तरेण रघूत्तम ॥१५॥ [२

---

१. अ ल$_{1}$, ल$_{2}$ व म ग्र भ च— दुर्बुद्धिश्च ।
२. रा—वानरमतिः ।
३. ग्र—† कार्ये ते तस्य ।
४. अ म च—सर्वतश्चापि ।
ल$_{2}$ म—सर्वत्रचापि ।
ग्र—सर्वतश्चापि ।
कै—सर्वत्रचैव ।
५. म ल$_{1}$ ग्र—नास्ति ।
६. कै अ ल$_{1}$ ग्र रा च— एवमुक्तास्तु हर० ।
म—० त्वा हरिवराः ।
७. अ च—† ०मुपागताः ।
८. ल$_{1}$—तदग्रं ।
९. ल$_{1}$—संसाद्य ।
१०. कै—† मासं ।
११. म—०मिगमने ।
१२. ल$_{1}$—नास्ति ।
१३. ग्र—श्रूयतामिदमा० ।
१४. ल$_{1}$—रघूद्वह ।

स यदा मायिनं नाम दानवं बलिनं नृप ।
N] परितापयते वाली मलयं पर्वतं प्रति ॥१६॥ [३
तदा विवेश दैत्योऽसौ मलयस्य महागुहाम् ।
N] अन्तः प्रविश्य तं वाली मायिनं प्रतिजग्मिवान् ॥१७॥ [४
ततोऽहं तेन निक्षिप्तो गुहाद्वारे विनीतवत् ।
N] न च निष्क्रान्तवान् वाली तदा संवत्सरे गते ॥१८॥ [५
तदा क्षतजवेगेन संपुपूरे बिलं तदा ।
N] तदाऽहं रुधिरं दृष्ट्वा भ्रातृशोक-विषादितः ॥१९॥ [६ पू
अथ मे बुद्धिरुत्पन्ना व्यक्तं मे निहतो गुरुः । [६ उ
N] शिला पर्वतसंकाशा तस्यं द्वारे मया कृता ॥२०॥
अशक्नुवन् निष्क्रमितुमसुरो हि मरिष्यति । [७
N] ततोऽहमायां नगरीं निराशो भ्रातृजीवितात् ॥२१॥
राज्यमादाय सुमहत्, तारां च रुमया सह । [८
N] मित्रैः परिवृतः सर्वैर् विहरामि गतज्वरः ॥२२॥ [९
आजगाम ततो वाली हत्वा तमसुरं मृधे ।
N] ततोऽस्मै राज्यमददु(?दां)गौरवाद् भयशङ्कितः॥२३॥ [१०

---

१. कै ल$_{1}$,ल$_{2}$ब म श—† माकिनं।
२. कै ल$_{1}$, ल$_{2}$ ब म श रा—रोषेण।
३. म—इतः प्रभृति १८ शस्थ'वाली' तिपदान्तं भ्रष्टम्।
४. कै अ ल$_{1}$ श रा भ च—विनीतवान् ।
५. कै ल$_{1}$ अ रा भ च—‡संपुपुरे।
६. अ भ च—सुव्यक्तं ।
७. भ—‡तद्वारे च ।
८. भ—वृता ।
९. कै—विमरिष्यति ।
अ च—‡ विनशिष्यति ।
भ—‡ विनशिष्यति ।
१०. भ—† ॰जीवितं ।
११. कै रा—राज्यं चादा॰ ।
अ भ च—राज्यं चादा॰ ।
१२. श—परिवृतैः ।
१३. अ भ च—वसामि विगत॰ ।

स मां जिघांसुर्दुष्टात्मा वाली विचलितेन्द्रियः ।
[१] परिकालयते रोषाद् धावन्तं सचिवैः सह ॥२४॥ [११
नदीश्च विविधाः पश्यन् पुराणि विविधानि च । [१२उ
१०] ततः पूर्वामहं गत्वा दक्षिणामहमाश्रितः ॥२५॥ [१४पू
दिशं च पश्चिमां भूयो गतोऽस्मि भयशङ्कितः । [१८पू
११] उत्तरां तु दिशं यान्तं हनुमान् मामथाब्रवीत् ॥२६॥ [२०उ
१३ उ] इदानीं मे श्रुतं राजन्नृष्यमूकं गिरिं प्रति ।
N] मतङ्गेन पुरा शप्तस्तदाश्रमपदं प्रति ॥२७॥ [२१
१३पू ] गच्छतो वानरेन्द्रस्य मूर्धा ते शतधा स्फुटेत् ॥२८॥ [२२पू
ततः पर्वतमागम्य ऋष्यमूकं नृपात्मज ।
न चिन्तितम् तदा वाली मतङ्गभयमोहितः ॥२९॥
एवं तदा मया राम प्रत्यक्षमुपलक्षितम् ।
१८पू ] पृथिवीमण्डलं कृत्स्नं गुहामस्यां(ऽस्म्या)गतस्तदा॥३०॥[३४

इत्यार्षे रामायणे किष्किन्धाकाण्डे पृथिवीवर्णनं नाम
सप्तत्रिंशः सर्गः ॥३७॥

---

१. के छ$_1$ म श रा—मा ।
२. के छ$_1$ छ$_2$ ब म थ रा—
जिघांसुः सुदुष्टा० ।
३. ब म थ—द्वाराणि ।
४. के छ$_1$ म थ—तु ।
५. म—‡०तं...नृष्य । (त्रुटितःपाठः)
श—यात च० ।
६. म—बसं ।
७. म—स्फुटत् । भ—पतेत् ।
८. के ल$_1$ ल$_2$ ब म थ रा—
इत ऊर्ध्वमध्यर्धश्लोकमात्रं नास्ति ।
९. अ—चिंतेत् तदा ।
च—०चिंते तदा ।
१०. के अ ल$_1$ ल$_2$ ब म थ रा च—
गुहामध्यग० ।
११. ल$_1$—नास्ति ।
१२. ल$_2$ ब म—किष्किन्दाका० ।
भ च—नास्ति ।

[1]पूर्वां तु दिशमास्थाय विनतः प्लवगर्षभः । [अब
N] प्रतस्थे हरिशार्दूलो वानरैर् बहुभिर्वृतः ॥१॥
ताराङ्गदाभ्यां सहितः प्लवगः पवनात्मजः ।
N] अगस्त्यसेवितामाशां प्रतस्थे हनुमान् कपिः ॥२॥ [५
पश्चिमां तु दिशं घोरां सुषेणः प्लवगैः सह ।
N] प्रतस्थे कपिशार्दूलो दिशं वरुणपालिताम् ॥३॥ [६
उत्तरां तु दिशं दिव्यां गिरिजालसमावृताम् ।
N] वीरः [2]शतबलो नाम प्रययौ सपदानुगः ॥४॥
सरांसि सागरान् मुख्यान् सरितः पर्वता[3]नपि ।
N] सर्वाणि कपयो जग्मुर् विनदन्तः प्लवंगमाः ॥५॥ [N
इति राजा दिशः सर्वाः संप्रस्थाप्य विचारकान् ।
N] कपिसेनापतीन् सर्वानन्वशासदुपस्थितान् ॥६॥ [N
नाम्ना विनतमेकाग्रं प्राचीं दिशमनुव्रज ।
N] तथा [4]शतबलं चैव कुवेरचरितां दिशम् ॥७॥ [N
दिशं वरुणगुप्तां च सुषेणमपि वानरम् ।
N] शशास दक्षिणामाशां हनूमन्तं [5]च साङ्गदम् ॥८॥ [N
हरीणां बलमेकाग्रं पृथिव्यां समुपस्थितम् ।
N] दृष्ट्वा प्रहृष्टः सुग्रीवो राजा वचनमब्रवीत् ॥९॥ [N

---

१. आसर्गारम्भाद् आ १०मश्लोकान्तात् कोष्ठान्तर्गतमनपेक्षितं पुनरुक्तमिव भवति। विरोधोऽपि कश्चित् स्पष्ट एव । न हि सकृत् प्रस्थिता वानराः पुनराहूय निर्देष्टव्या भवेयुरिति दिक् ।

१. अ—दिशां ।

२. अ भ च—शतबलिर् ।
अ—‡ शतबले नाम ।
च—शतबली नाम ।

३. भ दा—‡ पर्वतानि च ।

४. ँ अ भ च—शतबलिं ।

५. दा—नास्ति ।

सर्वमेवं विदित्वा तु दृष्ट्वा सीतां च जानकीम् ।
N] यथेहायात शीघ्रेण तथा वै परिधावत ॥१०॥ [N
अनुशिष्टास्तु ते सर्वे राज्ञा वानरयूथपाः । [N
२] व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरेव ते ॥११॥ [स.४७,१ख
सरांसि सरितो वृक्षान् संकटानि वनानि च ।
३] दुर्गाणि सर्वतः शैलान् व्यचिन्वन् प्लवंगर्षभाः ॥१२॥ [२
४ज] सुग्रीवेणाभिसंख्याता दिशस्ते वानरोत्तमाः ।
व्यचिन्वंश्चात्र बहुला अनुक्ताः मेभकोविदाः ॥१३॥ [३
५] सर्वे च सर्वदिवसान् सीताऽनुगमने गताः ।
समागच्छन्ते मेदिन्यां दिग्भागेषु च वानराः ॥१४॥ [४
६] सर्वर्तुकेषु देशेषु वानरास्तान् फलद्रुमान् ।

---

१. म श—सर्वमेव ।
२. ल$_1$, ल$_2$ ब—†विचित्वा ।
३. कै ल$_1$, ल$_2$ ब म श रा—तु ।
४. ल$_1$,ल$_2$ब म श रा भ - तथैव ।
५. म—अत: परमधिक: पाठ:—
स्वां स्वां दिशमभिप्रेत्य त्वरिता: संप्रतस्थिरे
दर्शनार्थं तु वैदेह्याः सबला: कपियूथपाः ॥
६. कै ल$_1$,ल$_2$ब म श रा—यथेहं ।
७. म च—कक्षान् । भ—कच्छान् ।
८. म ल$_1$, ल$_2$ ब म श रा भ च—सरित: ।
९. कै रा—† शैला विचेतव्याः ।
ल$_1$,ल$_2$ब म श—शैलाश्चेतव्याः ।
म च—†शैलान् विचेतव्यं ।
१०. रा—प्लवंगमाः ।
११. ल$_1$—०णाभिविख्याता ।
म—० णातिसंख्याता ।
म—० णाभिसंज्ञाता ।
१२. कै ल$_1$, ल$_2$ म श रा—
विचित्य चात्र । ब—विचित्यचात्र ।
भ च—विचिन्वन्नात्र ।
१३. भ—बहुलान् ।
१४. कै ल$_1$, ल$_2$ ब म श—
अनुक्तमग्र० ।
भ—अनुक्तान् प्रम० ।
रा—अनुक्तः प्र० ।
१५. ल$_1$,ल$_2$ब श—० गमनोचिताः ।
म—०मनोचित: । भ—०मने कृताः ।
१६. ल$_1$, ल$_2$ ब म—०गच्छन्तु ।
भ—०गच्छंस्तु ।
१७. भ—सर्वकोशेषु ।
म—सर्वक्षेत्रेषु ।

N] आसाद्य रजनीवासं चक्रुः सर्वे क्षपासु[1] ते ॥ १५ ॥ [५
कृतं[2] तु मासं समयं सीतायाः परिमार्गणे ।
N] कपिराजेन सम्मान्य[3] प्रेमुस्ते[4] कपिकुञ्जराः ॥१६॥ [६
संचिन्त्यं (ित्य) दिशं पूर्वां[5] विनताः[6] प्लवंगैः[7] सह ।
८] अदृष्ट्वैव ततः सीतामागच्छद्[8] वानरैः सह ॥१७[9]॥ [७
उत्तरां तु दिशं सर्वां प्रविचिंत्य[10] महाबलः[11] ।
९] अदृष्ट्वैव ततः सीतां वीरः शतबलः[12] कपिः ॥१८[13]॥ [८
सुषेणः पश्चिमां गत्वा प्राप्तः प्रस्रवणं गिरिम् ।
१०] समेत्य मासे संपूर्णे सुग्रीवमुपचक्रमे ॥१९॥ [९
११पू] तं प्रस्रवणपृष्ठस्थमभिगम्याभिवाद्य च । [१०पू
N] सुग्रीवं प्लवगाः सर्वे सुषेणप्रमुखा[14] ब्रुवन् ॥२०॥ [१०उ
११उ] निम्नगाः सागरान्ताश्च सर्वे जनपदास्तथा । [११उ
N] पत्तनानि च रम्याणि दीर्घा वाप्यश्च दारुणाः ।
१२पू] विचिताः पर्वताः सर्वे वनानि नगराणि च ॥२१॥

---

१. कै अ ल१,ल२ ब म श रा—
शाक्यः सर्वेष्वहःसु ।
च—शाक्या सर्वेष्व० ।
२. ल१ ल२ ब म श—कृत्वा ।
३. अ च—संस्मृत्य प्रेमुरते ।
भ—संस्मृत्य ।
४. कै ल१ ल२ ब श—विगतास्तु ।
म—]विगता तु । रा—धिगता तु ।
५. कै ल१,ल२ब म श रा—सर्वां
६. कै ल१ ल२ श—विगताः ।
ब—संचित्य ।
७. कै ल१ ल२ ब—प्लवगाः ।
म—इत ऊर्ध्वं 'सर्वां' मित्यन्तः
पाठो नास्ति ।
८. ल२ ब—० मागच्छन् ।
९. ल२ ब—
अस्य श्लोकस्य पूर्वार्द्धपरार्द्धव्यत्यासेन पाठः ।
१०. कै अ म श रा भ च—
प्रविचित्य ।
११. ल१ ल२ ब रा—महाबलाः ।
१२. कै अ रा भ च—शतबलिः ।
१३. कै ल१ ल२ ब म श रा—
इत ऊर्ध्वं सार्द्धश्लोकपाठो नास्ति ।
१४. कै—०मुखो ब्रुवन् ।
ल२ ब—०मुखे ब्रुवन् ।

गुहाश्च विविधाः सर्वाः संचयाः परिवर्तिताः ।
१३] उद्धताश्च महागुल्मा लताविटपसंभवाः ॥२२॥ [१२
१४ उ] सत्त्वान्यतिप्रवृद्धानि त्रासितान्याहतानि च । [१३उ
१५पू] राक्षसान् मन्यमानैश्च तत्र तत्र प्लवंगमैः ॥२३॥ [N
१६ उ] ये चैव गहना देशा विचितास्ते पुनः पुनः ।
१७ उ] प्रवृत्तिं चैव वैदेह्या नानुविन्दामहे प्रभो ॥२४॥ [N
हनूमतः प्रयुक्तस्य रामार्थे सूक्ष्ममार्गिणः ।
१८] आगतिं प्रतिकाङ्क्षामो न चिरादागमिष्यति ॥२५॥
N] विक्रमेण च शौर्येण प्रज्ञाबलसमन्वितः ॥२६॥ [N
उदारसत्त्वाभिजनो हनूमान्
स मैथिलीं ज्ञास्यति वानरेन्द्रः ।
दिशं तु तामेव हृता तु मैथिली
१९] यामास्थितो वायुसुतो महात्मा ॥२७॥ [१४

इत्यार्षे रामायणे किष्किन्धाकाण्डे वानरप्रत्यागमनं नाम
अष्टात्रिंशः सर्गः ॥३८॥

---

१. म भ—उद्धृताश्च ।
२. ल१ ल२ ब म श रा—लताविटपिसं० ।
३. म—सत्त्वान्यपि प्र० ।
४. अ ल१,ल२ ब म श—प्रवृत्तिश्चैव ।
५. के—‡०सूक्ष्मदर्शिनः । च—‡सूक्ष्मदर्शिनः । अ भ—०सूक्ष्मकृतः ।
६. अ भ च—आगतं ।
७. म—विक्रमेणैव ।
८. के ल१,ल२ ब म श—०समन्वितः
९. ल१—इति ।
१०. ल१ म श—किष्किन्धाका० । ब भ च—नास्ति ।
११. अ—प्रत्यागमनं ।

सह ताराङ्गदाभ्यां तु प्रस्थितो हनुमान् कपिः ।
१] सुग्रीवेण यथोद्दिष्टं तं तु देशं दुरासदम् ॥१॥ [१
स तद् वनमुपागम्य सह तैर्हरिभिर्हरिः ।
२] विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥२॥ [२
दुर्गाणि सरितः शैलान् कन्दरान् विषमान् ह्रदान् ।
३] चित्रस्वण्डांश्च विपुलान् सर्वतो वनपादपान् ॥३॥ [३
अन्वेषमाणाश्च तदा सर्वे ते हरियूथपाः ।
४] न सीतां ददृशुर् वीरा मैथिलीं जनकात्मजाम् ॥४॥ [४
५पू] ते मूलानि फलान्येवं भक्षयन्तो वनेचराः ।
N] अन्वेषमाणा दुर्धर्षा अवसंस्तत्र ते सुखम् ॥५॥ [५पू
तेषां तत्रैव वसतां कालश्चाभिगतो महान् । [N
६] स हि देशो दुराधर्षो गुहागहनवान् महान् ॥६॥ [५उ
विचीय तु तमुद्देशं सर्वे ते हरियूथपाः । [६उ
७] देशमन्यं दुराधर्षं विचेरुर्बहुपर्वतम् ॥७॥ [७उ
यत्र वै निष्फला वृक्षा निष्पत्राः पुष्पवर्जिताः ।

---

१. के ल$_1$,ल$_2$ब म श—यथादिष्टं । रा—यदादिष्टं ।
२. म श—स ।
३. रा म—+ कन्दरान् ।
४. अ—वनपादपान् ।
५. के ल$_1$, ल$_2$ ब म श रा—अन्विष्य० ।
६. के ल$_1$, ल$_2$ ब म श रा—तद् वीरयू० ।
७. म—नास्ति ।
८. ल$_1$ म—फलान्येव ।
९. म—नास्ति ।
१०. म—सुखे ।
११. के—विचेय तु । रा—विचेय तं । ल$_1$, ल$_2$ब म श—[illegible] ।
१२. के म श रा—विचेरुर् बहु० । ल$_1$,ल$_2$ ब—+ विचिरं बहु । ब—विचेरुर् बहु० ।
१३. के ल$_1$,म श—वृक्षाः पुष्पिताः ।

८] निस्तोयाः सरितो यत्र यत्र मूलं सुदुर्लभम् ॥८॥ [८
न सन्ति महिषा यत्र न मृगा न च हस्तिनः ।
९] शार्दूलाः पक्षिणो वाऽपि ये चान्ये वनगोचराः ॥९॥ [९पू
स्निग्धपत्रा न सन्त्यत्र पद्मिन्यः फुल्लपङ्कजाः ।
१०] सुगन्धयः प्रेक्षणीया भ्रमरैः परिवर्जिताः ॥१०॥ [१०
तपिडर्नाम महाभागः सत्यवादी तपोधनः ।
११] महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥११॥ [११
तस्य तस्मिन् वने पुत्रो बालको दशवार्षिकः ।
१२] प्रनष्टो जीवितान्ताय क्रुद्धस्तत्र महामुनिः ॥१२॥ [१२
तेन वै मुनिना शप्तं कृत्स्नं तच्च महावनम् ।
१३] अशरण्यं दुराधर्षमपि देवगणैः सह ॥१३॥ [१३
तस्य ते काननान्तानि गिरीणां निर्झराणि च ।
१४] प्रभवांश्च नदीनां च व्यचिन्वन् सहिताः समम् ॥१४॥ [१४
तत्रापि ते महात्मानो नापश्यन् जनकात्मजाम् ।
१५] हर्तारं रावणं चापि रामस्याप्रियकारिणम् ॥१५॥ [१५
अवगीतं तु तं दृष्ट्वा पर्वतं काञ्चनं तु तत ।
१६] अन्यमेव परं घोरं विविशुर् गिरिगह्वरम् ॥१६॥ [२२

१. कै क$_1$ ल$_2$ ब म श—
०पत्राश्च संपन्नाः ।
रा—०पत्रा न संपन्नाः ।
२. क$_1$—भ्रामरैः ।
३. कै क$_2$ म भ—तडिन्नाम ।
श—तडिर्नाम ।
४. क$_2$ क$_1$ ब म श—दुष्प्रतः ।
५. रा—नियमैर्दु० ।
६. अ क$_1$,क$_2$ ब म श रा भ च—
‡ प्रणष्टः ।
७. ल$_1$,ल$_2$ ब म श रा भ—तेनैव ।
८. ल$_1$—देवैर्महर्षिभिः ।
९. कै भ—विचिन्वन् ।
१०. कै—महिताः ।
११. भ—वापि ।
१२. कै अ ल$_1$ ब म श रा च—
अन्यमेवापरं ।
भ—अन्यमेवं परं ।

ते[1] प्रविश्य द्रुतं भीमं लतागुल्मसमावृतम् ।
१७] ददृशुः सुमहाकायमसुरं भीमविक्रमम् ॥१७॥ [१६
तं दृष्ट्वा वानरा भीमं स्थितं शैलमिवाग्रतः ।
१८] गाढं परिदधुः सर्वे तस्मिन् पतितचक्षुषः ॥१८॥ [१७
स हि तान् वानरान् सर्वांस्तिष्ठ तिष्ठेति चाब्रवीत् ।
२०] समभ्यधावत् संक्रुद्धो मुष्टिमुद्यम्य संमुखम् ॥१९॥ [१८
तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तथा ।
२१] रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥२०॥ [१९
स वालिपुत्राभिहतो मुखाच्छोणितमुद्वमन् ।
२२] असुरो न्यपतद् भूमौ पर्यस्त इव पर्वतः ॥२१॥ [२०
हते तस्मिन् निरुच्छ्वासे वानरा जितकाशिनः ।
२३] विचेरुः प्रयतास्तत्र सर्वे ते वनगह्वरम् ॥२२॥ [२१
तद् विचीय पुनः[5] खिन्ना विनिर्वृत्य समागताः ।
२४] एकान्ते वृक्षमूलस्था निषेदुर्दीनमानसाः । [२३
N] तृषापरिश्रमात् खिन्नाः कार्यव्यासंपतश्च ते ॥२३॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे दिग्विजयो नाम
एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

१. अ—संप्रविश्याद्भुतं ।
च—ते संप्रविश्याद्भुतं ।
भ—ते प्रविश्या० ।
२. अ रा भ च—सुरनिर्भयं ।
३. कै ल$_1$ ल$_2$ व म शा—नास्ति ।
४. कै ल$_2$ व रा—तं विचेय ।
५. ल$_2$ म—विनिर्वृत्य ।
६. ल$_2$ व म—विचार्य ।
७. अ कै ल$_1$ ल$_2$ व म शा भ—व्यापेक्षतश्च ।
(भ—हरिवाक्येन सीदित: )
८. ल$_1$—इति रामाय० ।
९. ल$_2$ व म रा—किष्किन्धाकाण्डे० ।
कै भ च - नास्ति ।
१०. भ—नास्ति ।

ततो वायुसुतः श्रीमानङ्गदप्रमुखान् हरीन् ।
१] आसीनानब्रवीद् सर्वान् वाक्यं वाक्यविशारदः ॥१॥ [N
४उ] विचितं वै वनं सर्वं तृणं नो विदलीकृतम् ।
न च(?न्वा)पश्याम वैदेहीं रावणं चापि राक्षसम् ॥२॥ [N
५] सुग्रीवेण यथोदिष्टा देशास्ते विचितास्तथा ।
६पू] अनुदिष्टाश्च [१]ये देशास्ते चापि विचिताः पृथक् ॥३॥ [N
८उ] तदुच्यतां यथाप्राप्तं किं वै[२] क्षमंमतः परम् ।
न च सा दृश्यते सीता भ्रमामो येन हेतुना ॥४॥ [N
९] तस्यैवं ब्रुवतो वाक्यमङ्गदः प्लवगात्मजम् ।
उवाच वचनं वीरो वानरस्तं सुखावहम् ॥५॥ [N
१०] सर्व एव समर्थाश्च श्रुतवन्तश्च वानराः ।
११पू] वैक्लव्यमत्र मा गाँस्त्वं सीताऽधिगमने वृथा ॥६॥ [N
१३उ] यद्यप्येतद् वनं सर्वं विचितं वै[१] समाहितैः ।
१४पू] खेदं त्यक्त्वा हरिवरैः पुनरेव विचीयतां तम् ॥७॥ [७
१३पू] अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् ।
१४उ] विक्लवत्वं न गन्तव्यं न हि नो धर्षणं क्षमम् ॥८॥ [८

---

१. म—चापि ।
२. अ म च—विचितास्त्वमी ।
३. कै ळ$_{1}$ श रा च—ते ।
म—नास्ति ।
४. कै ळ$_{1}$ ळ$_{2}$ व म श रा—च ।
५. कै ळ$_{1}$,ळ$_{2}$,व म श रा—क्षेमम० ।
६. अ म च—वानराणां ।
७. अ म—‡ गास्त्व । च—‡ गास्त्व ।
रा—गास्तु ।
८. कै ळ$_{1}$—यद्यप्येतद् ।
९. कै अ ळ$_{2}$ व म श रा म च—वा ।
१०. अ ळ$_{1}$ ळ$_{2}$ व म श रा—
विचीयतां ।
११. म—अवाप्यं ।
१२. ळ$_{1}$—† विक्लवं ते ।
श—† विक्लवं वं ।
रा—‡ विक्लव्यत्वं ।
म—† विक्लवं त्वं ।
१३. म—मर्षणं ।

सुग्रीवः क्रोधनो राजा तीक्ष्णदण्डः स वानरः।
१५] भेतव्यं तस्य शूरस्य रामस्य च महात्मनः ॥९॥ [९
गनेषु कृतकृत्येषु मुक्तलज्जाभयेषु च।
N] किं च कुर्यात् स नो राजा सुहृत्कार्ये निवेदिते ॥१०॥ [N
हितार्थमिदमुक्तं हि क्रियतां यदि रोचते।
१६] उच्यतां वा क्षमं किञ्चित् सर्वेषामेव वानराः ॥११॥ १०
अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः।
१७] उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥१२॥ [११
सदृशं खल्विदं वाक्यमङ्गदो यदुवाच ह।
१८] हितं चैवानुकूलं च क्रियतामस्य भाषितम् ॥१३॥ [१२
पुनर् मार्गामहे सर्वान् कन्दरांश्च वनानि च।
१९] काननानि च दिव्यानि नदीः प्रस्रवणानि च ॥१४॥ [१३
यथोपदिष्टमस्माकं, सुग्रीवेण महात्मना।
२०] वयं विचिनुमः सर्वे गिरिदुर्गाणि सर्वशः ॥१५॥ [१४
ततः पुनः समुत्तस्थुर् वानरास्ते महाबलाः।
२१] विन्ध्यकाननसंच्छन्नां व्यचिन्वन् दक्षिणां दिशम् ॥१६॥ [१५
ते शारदाभ्रप्रतिमं महारजतपर्वतम्।
२२] शीघ्रमारुरुहुः सर्वे दरीमन्तं च पर्वतम् ॥१७॥ [१६

---

१. कै ल$_1$ ल$_2$ ब म रा—युक्तलज्जाभ०।

२. म—०कार्यं।

३. ल$_2$ म—+ गंदमादनः।

४. अ ल$_1$ म रा च—उवाचाव्यक्तया।

५. ल$_2$ ब म श—+ अङ्गदं।

६. श—०यतामपि।

७. ल$_1$ ल$_2$ ब म श भ—नदीप्रस्रवणा०।

८. कै अ रा भ च—+ विचिन्वन्।
ल$_2$ ब म श—व्यचिन्वन्।

९. अ ल$_2$ भ च—महारजत०।

१०. ल$_2$—नास्ति।

तत्र लोध्रवनं चैव सप्तपर्णवनानि च ।
२३] विचिन्वन्तो हरिवराः सीतादर्शनकाङ्क्षिणः ॥१८॥ [१७
तं[2] ते[2] समधिरूढा वै विक्रान्ता लघुविक्रमाः ।
२४] न चापश्यन्त वैदेहीं रामस्य महिषीं प्रियाम् ॥१९॥[१८
ते तु दृष्टिहतं कृत्वा तं शैलं बहुकन्दरम् ।
२५] अवचेरुरसम्भ्रान्ता वीक्षमाणाः समन्ततः ॥२०॥ [१९
अवतीर्य च ते भूमिं श्रान्ता विगतचेतसः ।
२६] स्थिता मुहूर्तं तत्रापि वृक्षमूलमुपाश्रिताः ॥२१॥ [२०
ते मुहूर्तं समाश्वस्ताः किञ्चिद्भ्रष्टपरिश्रमाः ।
२७] पुनरेवोद्यताः कृत्स्नां विचेरुर् दक्षिणां दिशम् ॥२२॥ [२१

इत्यार्षे रामायणे किष्किन्धाकाण्डे पर्वतारोहणं नाम
चत्वारिंशः सर्गः ॥ ४० ॥

---

१. छ$_2$ ब म श—रोध्रवनं ।
छ$_1$—लोध्रवणं ।
२. छ$_2$ ब—ततो ।
३. कै छ$_1$, छ$_2$ ब म श रा—
समवर्षिं ।
४. छ$_1$—दृष्टिहितं ।
५. म—‡ अवचेरुर् ।
६. कै ल$_1$, ल$_2$ ब म श रा—
† वीक्ष्यमाणाः ।
७. अ—दिशां ।
८. अ च—० काण्डे दिग्विजये ।
म—०यणे दिग्विजये ।
कै—नास्ति ।
९. कै म—‡ ०रोहनं । अ—०रोहणो ।

[वं-५०]= [एकचत्वारिंशः सर्गः] =[ क०-५० ]

तारा‌ङ्गदाभ्यां सहितः ससैन्यो हनुमान् कपिः ।
१] विचिनोति स्म विन्ध्यस्य गुहाश्चैव वनानि च ॥१॥ [१
ते मार्गमाणाः संरब्धा रामार्थे त्यक्तजीविताः ।
२] घोराणि गिरिदुर्गाणि प्राविशन्त प्लवङ्गमाः ॥२॥ [N
१ उ] स हि देशो दुराधर्षो गुहागहनगोचरः । [४उ
N] तत्र वायुसुतः श्रीमान् विन्ध्यमार्गानमार्गत ॥३॥
N] सर्वमावेक्ष्य हनुमानन्योन्यस्याविदूरतः । [५
५ उ] गजो गवाक्षो गवयः शरभो गन्धमादनः ॥४॥
मैन्दश्च द्विविदश्चैव हनुमाञ् जाम्बवान् नलः । [६
६] अङ्गदो युवराजश्च तारश्च वनगोचरः ॥५॥ [७पू
८उ] समागम्य ततः सर्वे विचिन्वन्ति स्म तद्वनम् ।
N] ते विचिन्त्य (ित्य) ततः सर्वे तं गिरिं वानरर्षभाः ''। [N
विषादमगमन् भूयः सुग्रीवाद् वानरर्षभात् ॥६॥ [N
९] सुविषण्णमुखा दीनाः सुग्रीवभयमोहिताः ।
अपश्यमानास्ते सीतां रावणं च सुदुःखिताः ॥७॥ [N
१०] बुभुक्षिताः परिश्रान्तास्तृषिताः सलिलार्थिनः ।

---

१. अ म भ च—स ।

२. श—विंध्यस्य: ।

३. रा—अविक्षन्त: ।

४. कै ल, ल२ व म—
विंध्यमार्ग: स मार्गते ।
श—] विंध्यमार्गंस मार्गते ।
अ च—विंध्यमार्गान् स्म मार्गते ।

५. व—०मावीक्ष्य ।

६. ल१—०न्योन्यस्य विदूर० ।

७. कै अ ल२ व म रा च—सरभो ।

८. कै ल१ ल२ व म रा—
द्विविधश्चैव ।

९. कै ल१ ल२ व म श—नास्ति ।

१०. अ रा च—वनगोचरा: ।

११. रा च—अत: परमधिक: पाठ:—
समागम्य तत: सर्वे तं गिरिं वानरर्षभा: ।

१२. भ—वानरर्षभा: ।

११पू ] निरीक्षमाणा[1] ददृशुस्तैः संछादितं बिलम् । [८
ततः क्रौञ्चाश्च हंसाश्च निपतन्ति सहस्रशः ॥८[2]॥
१२] बलाकाश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः । [९
१३पू ] कुररीः[3] सारसाश्चैव वञ्जुलाश्च विहङ्गमाः ।
१४पू ] जलकुक्कुटकाश्चैव ये चान्ये जलवासिनः ॥९[4]॥ [N
१४ उ] ततो दृष्ट्वा बिलं सर्वे विस्मयाकुलचेतसः[5] ।
अभवन् वानराः सर्वे पश्यन्तः स्थिरचक्षुषो[6] ॥१०॥ [१०
१५] ततः पर्वतसंकाशो हनूमान्[7] वानरर्षभः[8] ।
१६पू ] अब्रवीद् वानरान् सर्वान् विषण्णमनसो[9] स्थितान् ॥११[10]॥ [११
N] विचितोऽयं गिरिः सर्वः शतशो वानरर्षभाः[11] । [N
यदर्थं च वयं प्राप्ताः सा च[12] सीता[13] न[14] दृश्यते ॥१२॥ [१४ उ
१७] बिलादस्मात् तु सहसा हंससारसवञ्जुलैः[15] ।
जलार्द्राश्चक्रवाकाश्च निष्क्रामन्ति सहस्रशः ॥१३॥ [१५
१८] नूनं सलिलवानत्र[16] कूपो वा यदि वा ह्रदः । [१६पू
भविष्यति[17] यथा ह्येते निपतन्ति जलेचराः १४॥ [N

---

१. रा च—† निरीक्ष्यमा० ।
२. कै ल, ल, ब म श—नास्ति ।
३. श—कुररा: ।
४. ल, ल, ब म श रा—
अत: परमधिक: पाठ:—
दृष्ट्वा तैर्वानरै: सर्वै: शङ्का चैषामजायत ।
कुत्रास्ति वै सरो नूनं दृश्यन्ते जलचारिण: ॥
५. ल, ल, ब म श—० चेतना: ।
६. म म—स्थिरचक्षुष: ।
म ल,—‡ स्थिरचक्षुषा: ।
७. ल,ल,ब श रा म—हनुमान् ।
८. रा—वानर: ।
९. कै ल, ब म श रा भ च—० मनस: ।
१०. म—नास्ति ।
११. भ—वानरर्षभै: ।
१२. म—नास्ति ।
१३. म—वैदेही ।
१४. कै ल, ल, ब म श रा—
† प्रदृश्यते । म—न चाप्यते ।
१५. ल,—† वंजका: ।
१६. ल, ल, ब म श रा—
सलिलं तत्र वा नूनं ।
१७. ल,—‡ विविष्यति ।
रा—† भविष्यन्ति ।

१९] प्रविश्यात्र विचेष्यामो रावणं पापचेतसम् ।
२०पू ] तां च सीतां महाभागां सर्व एव महद्बिलम् ॥१५॥ [N
इत्युक्त्वा तद् बिलं सर्वे प्राविशंस्तिमिरावृतम् ।
२१] अचन्द्रसूर्यं हरयो ददृशुर् लोमहर्षणम् ॥१६॥ [१७
२२पू ] ततस्तस्मिन् बिले दुर्गे[3] शिलानिर्झरसंवृते ।
२३पू ] अन्योन्यं संपरिष्वज्य जग्मुर् योजनमुत्तरम् ॥१७॥ [२१
ते नष्टसंज्ञाः संभ्रान्तास्तृषिताः सलिलार्थिनः ।
२४] परिपेतुर् बिले तस्मिन् मासमेकं बुभुक्षिताः ॥१८॥ [२२
ते कृशा दीनवदनाः परिश्रान्ताः पिपासिताः ।
२५] आलोकं ददृशुर् वीरा निराशा जीवितं प्रति ॥१९॥ [२३
ततस्तं देशमासाद्य सौम्यं वितिमिरं शुभम् ।
२६] ददृशुः काञ्चनान् वृक्षान् दीप्तानग्निशिखोपमान् ॥२०॥ [२४
सालान् प्रियकतालांश्च पूर्णकांश्च द्रुमांस्तथा ।
२७] चम्पकान् नागपुष्पांश्च नानाशकुनिनादितान् ॥२१॥ [२५
२८पू ] तरुणादित्यसंकाशान् रक्तैः किसलयैर्वृतान् । [२७पू
N] नीलवैडूर्यवर्णाश्च पद्मिनीर् विहगैर् युताः ॥२२॥
N] महद्भिः काञ्चनैः पुष्पैर्वृता बालार्कसन्निभाः । [२८
२८ उ] जातरूपमयैर् मत्स्यैर् विचरद्भिः सकच्छपैः ॥२३॥

---

१. छ$_1$—'प्रविश्य' इत्यारभ्य 'दुर्गे' इत्यन्तः पाठो नास्ति ।
२. रा—ततस्तेऽस्मिन् ।
शा—तत्र तस्मिन् ।
३. कै ल$_1$ व म शा रा—सर्वे ।
४. कै ल$_1$ ल$_2$ व म शा रा च—०निर्वृते ।
५. ल$_2$ व—ततस्ते ।
६. म—प्रदीप्ता विशिखा इव ।
७. ल$_2$ व—प्रियाकता० ।
८. कै व म—‡ चम्पकान् ।
शा—‡ वाहकान् ।
९. कै अ ल$_1$,च—† पद्मिनी वि० ।

नलिनीस्तत्र ददृशुः प्रसन्नसलिलाः शुभाः । [२९
२९] काञ्चनानि विमानानि राजतानि गृहाणि च ॥२४॥
तपनीयगवाक्षाणि मुक्ताजालान्तराणि च । [१०
१०] हैमराजतभौमानि दिव्यमाल्ययुतानि च ॥२५॥ [११पू
प्रभया भ्राजमानानि काञ्चनानि बृहन्ति च । [N
११] ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः ॥२६॥ [१२उ
तप्तकाञ्चनचित्राणि शयनान्यासनानि च ।
१२] स्वास्तीर्णानि विशालानि ददृशुस्ते वनौकसः । [१३
१३पू] हैमराजतमुख्यानां भाजनानां च संचयान् ॥२७॥ [१४पू
पुष्पितान् फलिनश्चैव प्रवालमणिसंचयान् ।
N] पादपांस्तत्र ददृशुर् वानरा हरितच्छदान् ॥२८॥ [N
विद्युत्संपातवर्णाश्च सामवेदसमस्वनान् ।
N] ददृशुर् वृक्षशाखासु भ्रमरान् काञ्चनप्रभान् ॥२९॥ [N
N] मनोरमाणि रम्याणि ददृशुस्तत्र तत्र वै ॥३०॥ [N
१३ उ] शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
महार्हाणि च वस्त्राणि धान्यानि च धनानि च ॥ ३१॥[१५

---

१. कै—‡दिव्यामाल्ययुतानि ।
ल१, ल२, व—दिव्यमाल्ययुतानि ।
श—दिव्यमाल्यायुतानि ।
२. श—मुक्ताजालोत्तराणि ।
३. कै म ल२ व म श रा च—हेमराजत० ।
४. ल१—नास्ति ।
५. म—† मुक्ताजालांतराणि ।
६. ल१—नास्ति ।
७. ल१ ल२—[illegible]राजत० ।
८. म भ—संचयं ।
९. म—†० संचयं ।
१०. रा—नास्ति ।
११. कै—†भ्रमराः ।
१२. भ श—मनोरम्याणि ।
ल१ रा—‡मनोरमाणि ।
१३. कै—रम्याणि ।
१४. कै ल१, ल२ व म श—[illegible]काणि ।
१५. रा—नास्ति ।

१४] दिव्यानामङ्गरागाणां महाऽर्हाणां च वाससाम् ।[1]
१५ उ] कम्बलानां विचित्राणामजिनानां च संचयान् ॥३२॥ [१६
तत्र तत्र च दिव्यानि दीप्तानि रुचिराणि च ।
१६] ददृशुर् वानराः सर्वे गृहमुख्यानि सर्वशः ॥३३॥ [१७
तानि दृष्ट्वा च ददृशुश् चीरकृष्णाजिनाम्बराम् ।
१७] तापसीं नियताहारां ज्वलन्तीमिव तेजसा ॥३४॥ [१९
ततो हनूमान् गिरिसन्निकाशः
कृताञ्जलिस्तामभिवाद्य तस्थौ ।
पप्रच्छ का त्वं भवनं बिलं च
१८] रत्नानि चैतानि वराणि कस्य ॥३५॥ [४२

इत्यार्षे रामायणे किष्किन्धाकाण्डे दिग्विजये बिलप्रवेशो नाम

एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

१. कै—०|रागानां ।
२. कै ल१, ल२ ब म श—
अतः परमधिकः पाठः—
कन्दकानि महार्हाणि मूलानि च फलानि च ।
श—नास्ति ।
३. कै ल१, ल२ ब म श—महार्हाणां ।
४. कै ल१, ल२—हनुमान् ।
५. ब म च—नास्ति ।
६. ल२ म श—किष्किन्धा० ।
७. ल२—|दिग्विजयो ।

इत्युक्त्वा हनुमान् वीरस्त् चीरकृष्णाजिनाम्बराम् ।
१] अब्रवीत् तां महाभागां तापसीं संशितव्रताम् ॥१॥ [१
वानराः स्मो महाभागे मतङ्गवनगोचराः । [N
२] इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ॥२¹॥ [२पू
बुभुक्षिताः परिश्रान्ता हरयो न पराजिताः ।
३] इदं धरण्यां विवरं प्रविष्टाः स्म पिपासिताः ॥३²॥ [२उ
ईमं चेहे विधिं दृष्ट्वा विहितं चाद्भुतोपमम् ।
४] भूयो वयं प्रव्यथिताः सम्भ्रान्ता नष्टचेतसः ॥४॥ [३पू
५पू] कस्येमे काञ्चना वृक्षास् तरुणादित्यसन्निभाः ।
शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ॥५॥ [४
६] काञ्चनानि विमानानि राजतानि गृहाणि च ।
७पू] तपनीयगवाक्षाणि मुक्ताजालान्तराणि च ॥६॥ [५
५उ] पुष्पिताः फलवन्तश्च पुण्याः सुरभिगन्धिनः ।
७उ] इमे जाम्बूनदमयाः पादपाः कस्य तेजसा ॥७॥ [६
काञ्चना विविधाः पद्मा राजता विमले जले ।
८] कथं मत्स्याश्च सौवर्णा विचरन्ति सकच्छपाः ॥८॥ [७

---

१. श्रा—नास्ति ।
२. कै म श रा—विदितं ।
अ भ च—विहृतं ।
३. ल₂—नास्ति ।
४. कै ल₁, ल₂ ब म श्र रा—
हृदेच च ।
५. श—]प्रविष्टवाः ।
६. अ—+शुचीनामथ० ।
७. श—रञ्जितानि ।
८. ल₁—मुक्ताजालोत्तराणि ।
९. कै ल₁, ल₂ ब श रा—
पुष्पिताः फलगंधिनः ।
म—सुपुष्पाः फलगं० ।
१०. ल₁ +तेजसाः ।
अ भ च—तेजसा ।
श्रा—तेजसः ।
११. कै रा—फले ।

आत्मानं च तमाचक्ष्व यस्य चेदं महद् बिलम् ।
९] अभ्यागतानामस्माकं तत्त्वं व्याख्यातुमर्हसि ॥९॥ [८
एवमुक्ता हनुमता तापसी ब्रह्मचारिणी ।
१०] प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ॥१०॥ [९
मयो नाम महातेजा मायावी दानवर्षभः ।
११] तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ॥११॥ [१०
पुरा दानवमुख्यानां विश्वकर्मा बभूव सः ।
१२] तेनेदं काञ्चनं सर्वं निर्मितं भवनोत्तमम् ॥१२॥ [११
स तु वर्षसहस्राणि तपस्तप्त्वा महावने ।
१३] पितामहाद् वरं लेभे सर्वशत्रुनिबर्हणम् ॥१३॥ [१२
वज्रयानस्ततो मृत्युं सर्वकामेश्वरः सुखी ।
१४] एवं स उषितः कालं कञ्चिदस्मिन् महाबिले ॥१४॥ [१३
ततोऽप्सरसि हेमायां सक्तं दानवपुङ्गवम् ।
१५] शनैर्निष्क्रान्तमालोक्य निजघान पुरन्दरः ॥१५॥ [१४
तदिदं ब्रह्मणा दत्तं बिलं तुष्टेन भो मयि ।
१६] एवमेतच्च भवनं गृहं चेदं हिरण्मयम् ॥१६॥ [१५

---

१. कै—†आत्मानमनुमा...च ।
म श—†आत्मानमनमायक्ष्व ।
रा—†आत्मानमनुमानं ।
ल१—†आत्मानमनुरूपं च ।
अ म च—आत्मानमनुमावं च ।
२. म—हनूमता ।
३. रा—वरं ।
४. ल२ ब—†सा ।
५. श—सर्वशक्तिनि० ।
६. अ म—उषितं ।
७. अ म च—तमप्सरसि ।
८. ब—बलिना ।
९. म—
तदयं ब्रह्मणा दत्तो वरो हृष्टेन हेमया ।
१०. अ म च—एवमेतत्तु ।

दुहिता मेरुसावर्णेरहं नाम्ना स्वयंप्रभा ।
१७] इदं रक्षामि भवनं हेमाया वानरर्षभाः ॥[2]१७॥ [१६
सा मे[3] प्रियसखी हेमा नृत्यगीतविशारदा ।
१८] तया दत्तवरा चेदं रक्षामि भवनोत्तमम् ॥१८॥ [१७
किं कार्यं कस्य वा हेतोः कान्ताराणि च गच्छथ ।
२६] कथं चेदं बिलं दुर्गं युष्माभिरुपलक्षितम् ॥१९॥ [१८
इमान्यभ्यवहार्याणि मूलानि च फलानि च ।
N] भुक्त्वा पीत्वा[4] च पानीयं सर्वं मे वक्तुमर्हथ ॥२०॥ [१९
एतच्छ्रुत्वा शुभं वाक्यं तापस्या धर्मसंहितम् ।
[5]१९] हनूमान् हरिशार्दूलः प्रत्युवाच स्वयंप्रभाम् ॥२१॥ [२०
अर्थिनां[6] संप्रपन्नानां कुरु धर्ममनुत्तमम् ।
२०] म्रियमाणान् निराहारान् संजीवय तपोधने ॥२२॥ [२१
तस्य सा तु वचः श्रुत्वा तापसी धर्मचारिणी ।
२१] आदाय फलमूलानि विधिनोपानयत्[7] तदा ॥२३॥ [२२
प्रतिगृह्य तु तस्यास्ते तदातिथ्यं वनेचराः ।
२२] विधिवद् भक्षयन्ति स्म पूजयन्तः स्वयंप्रभाम् ॥२४॥ [२३
भक्षयित्वा च सर्वे ते[8] पीत्वा च विमलं जलम् ।
२३] अपश्यन् सर्व एवैते[9] दिशो वानरपुंगवाः ॥२५॥ [२४

---

१. ळ१—मरुसावर्णेर् ।
२. ळ१—नास्ति ।
३. ळ१ सखे ।
म—मम ।
४. ळ२—†पीता ।
५. ळ२ च श—हनुमान् ।
६. म—अर्थिनः स्म प्रपन्नार्थे चर ।
च—अर्थिनां संप्रपन्नार्थे चर ।
७. श—विधिनोपायनं ।
अ भ च—विधिनोपाहरत् ।
८. अ ळ१ रा भ च—ते सर्वे ।
९. ळ२—‡ सर्वदैवेते ।
च †सर्वदैवते ।
म श—सर्वदैवैते ।

प्रसन्नवदनाः सर्वे सर्वे सन्तुष्टमानसाः ।
२४] संजातबलवीर्याश्च तत्रासन् हरिपुङ्गवाः ।
N] तर्पिता विविधैर्मूलैः फलैः स्वच्छेन वारिणा ॥२६॥ [२५

इत्यार्षे रामायणे किष्किन्धाकाण्डे स्वयंप्रभादर्शनं नाम
द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

१. भ—वानरयूथपाः ।
२. अ भ च—शीतेन ।
३. ल१—श्लोकार्धोऽयं २५शश्लोकान्तरं वर्तते ।
४. ल२ ब भ श—किष्किन्दा । भ च—नास्ति ।

अथ तानब्रवीत् सर्वान् विश्रान्तान् हरिपुङ्गवान् ।
२५] इदं वचनमेकैव तापसी धर्मचारिणी ॥१॥ [१
वानरा यदि वः खेदः प्रनष्टो मूलभक्षणात् ।
२७] यदि वेदं मया श्राव्यं श्रोतव्यं साधु कथ्यताम् ॥२॥ [२
तस्यास्तद् वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
२८] आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥३॥ [३
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
२९] रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनम् ॥४॥ [४पू
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि सीतया । [४उ
३०] तस्य भार्या जनस्थानाद् रावणेन हृता बलात् ॥५॥ [५
तस्य वीरः सखा प्राज्ञः सुग्रीवो नाम वानरः ।
३१] राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥६॥ [६
रावणं सहिताः सर्वे राक्षसं कामरूपिणम् ।
३३] सीतया सह वैदेह्या मार्गध्वमिति चागताः ॥७॥ [८
विचीर्य तु वयं सर्वे समग्रां दक्षिणां दिशम् । [९पू
३४] नाधिगच्छाम वैदेहीं रावणं नापि तं रिपुम् ॥८॥ [N

१. कै ल₂—†विश्रांतान् ।
२. ल₁ रा—ब्रह्मचारिणी ।
३. अ ल₁,ल₂ब श रा च—‡प्रणष्टो ।
४. भ—
इत ऊर्ध्वं १पञ्चश्लोकान्तः पाठः भ्रान्ते ।
५. अ श च—चेदं ।
६. म—† श्रव्यं ।
७. कै ल₁ ल₂ ब म श रा भ—
आर्जवेन ।
८. श—‡ दंडकावनं ।
९. ल₁—सह ।
१०. श—† राघवस् ।
११. ल₁ ल₂ ब म श—राक्षसं ।
१२. ल₁ ल₂ ब म श—सहिताः ।
१३. ल₂—‡विचीयत ।
ब—‡विचेव तु ।
रा—‡विचेयत ।

बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः । [९उ
३५] विवर्णवदनाः सर्वे सुग्रीवभयदर्शिनः ॥९॥ [१०पू
तृषया चार्दिताः सर्वे सर्वे ध्यानपरायणाः । [N
३६] न गच्छामो वयं पारं मग्नाः शोकमहाऽर्णवे ॥१०॥ [१० उ
चारयन्तस्ततश्चक्षुः पश्यामो विवृतं बिलम् ।
३७] लतापादपसंच्छन्नं महदास्यमिव क्षितेः ॥११॥ [११
ततो हंसाः समुत्पेतुः पक्षैः सलिलरोषिभिः ।
३८] कुरराः सारसाश्चैव वञ्जुलाश्चैव पक्षिणः ॥१२॥ [१२पू
३९ उ] ततो मे बुद्धिरुत्पन्ना तान् दृष्ट्वा जलचारिणः । [N
अत्र प्रवेक्ष्याम इति मया प्रोक्ताः प्लवंगमाः ॥१३॥ [१२उ
४०] अमीषामपि सर्वेषामेषा बुद्धिरुपस्थिता ।
गच्छामः प्रविशामोऽत्रै भर्तृकार्यत्वराऽन्विताः ॥१४॥ [१३
४१] परिगृह्य ततो गाढं वयं हस्तं परस्परम् ।
इदं प्रविष्टाः सहसा बिलं सतिमिरं महत् ॥१५॥ [१४
४२] एतन् नः कार्यमेतेन कार्येण वयमागताः ।
४३पू] त्वां चैवोपगताः सर्वे म्रियमाणा बुभुक्षया ॥१६॥ [१५
४४ उ] ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः । [१६उ
एवमुक्ता तु धर्मज्ञा वानरैस्तैः स्वयंप्रभा ॥१७॥ ।

---

१. कै ल$_1$, ल$_2$ ब म श रा—
०स्ततः सर्वे ।

२. म ल$_2$ ब श रा म थ—मतिर०,

३. कै ल$_1$, ल$_2$ ब म श रा—
प्रविशामश्च ।

४. म रा—०भुक्षया ।

४५] प्रत्युवाच ततः सर्वानिदं तान् हरिपुङ्गवान् । [१८
सर्वेषां परितुष्टाऽस्मि वानराणां महौजसाम् ॥१८॥

४६] चरन्त्याश्च इमं धर्मं न कार्यं मम केनचित् । [१९
N] एतेनैव कृतं मह्यं यद् विश्रान्तं श्रमातुरैः ॥१९॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे स्वयंप्रभाख्यानं नाम
त्रिचत्वारिंशः सर्गः ॥४३॥

---

१. कै ञ $ङ_1$,$ङ_2$ ब म श रा च— चरतां रामकार्यार्थं ।

२. श— यदि वांछं ।

३. $ङ_1$,$ङ_2$ ब म श— किष्किन्धाका॰ म च— नास्ति ।

१पू] एवं श्रुत्वा शुभं वाक्यं तापस्या धर्मसंहितम् । [१पू
९उ] ऊचुः प्राञ्जलयः सर्वे परितुष्टाः स्वयंप्रभाम् ॥ १ ॥ [N
लोलस्वभावैरस्माभिर् यदिदं व्याहृतं वचः ।
१०] तत् सर्वं मर्षणीयं ते सर्वैरेषं कृतोऽञ्जलिः ॥ २ ॥ [N
एकं तु वयमिच्छामस्त्वत्प्रसादं तपोधने ।
११] श्रूयतामभिधास्यामस्तच्छ्रुत्वा कर्तुमर्हसि ॥ ३ ॥ [N
कृत्स्नो मासः परिगतो बिलेऽस्मिंस्तु तपोधने ।
१२] न च जानीम तं देशं प्रविष्टा येन वानराः ॥ ४ ॥ [N
तदिच्छामो वयं भद्रे बिलात् तस्मात् तपोधने ।
१३] त्वत्तेजसा विनिर्गन्तुं त्वं हि नः परमा गतिः ॥५॥ [N
कृतश्च समयोऽस्माकं सुग्रीवेण महात्मना । [२उ
१४] स च कालो व्यतिक्रान्तो बिलेऽस्मिन् परिधावताम् ॥६॥[३पू
महच्च कर्म कर्तव्यमस्माभिर् धर्मचारिणि ।
१६] तच्चापि न कृतं कार्यमिहास्माकं प्रवेशनात् । [५
१७पू ] तद् राजभयभीतान् नः प्रीत्या जीव(?यि)तुमर्हसि ॥७॥[४उ
इति ब्रुवाणांस्तान् सर्वान् सर्वभूतहिते रतो । [N

---

१. कै अ ब म ल$_2$ श भ—
०रेव ।
रा ल$_1$ च—०ष कृतांजलिः ।
ब—‡ ०ष कृतेञ्जलिः ।
श — ०व कृतांजलिः ।
२. अ भ—एवं ।
३. अ—०त्प्रसादात् ।
४. ल$_1$ ब म ल$_2$ श—नास्ति ।
५. कै रा ल$_1$ ब म ल$_2$ श—
बनेस्मि० ।
६. ल$_1$ ब म ल$_2$ श—नास्ति ।
७. भ—
सा त्वमस्माद् बिलाद्गांतुत्तारयितुमर्हसि ।
८. रा ल$_1$ ब म ल$_2$ श भ—
० ञ्जविष्ट० ।
९. कै रा ल$_1$ अ ब म ल$_1$ श—
०तेरतान् ।
च—०वेरतो ।

१८] इदं मधुरया वाचा तापसी वाक्यमब्रवीत् ॥८॥ [६
इदं तु सुरराजेन बिलं शक्रेण संयुगे ।
१९] असुरार्थं विसृष्टेन पुरा वज्रेण दारितम् ॥९॥ [७
दुराधर्षं दुरावापं नानारत्नविभूषितम् ।
२०] महामायेन भूतार्थं निर्मितं विश्वकर्मणा ॥१०॥ [८
एवं देवविसृष्टेन बिलेऽस्मिन् वज्रदारिते ।
२१] जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥१२॥ [९
तपसश्च प्रभावेन नियमोपार्जनेन च ।
२२] सर्व एव बिलादस्मान्निष्क्रमिष्यथ वानराः ॥१२॥ [१०
सम्मीलयत नेत्राणि सर्वे वानरपुङ्गवाः ।
२३ड] न हि निष्क्रामितुं शक्यं चक्षुषि ह्यनिमीलिते ॥१३॥ [११ ड
ततस्ते हरयः सर्वे सुकुमाराङ्गुलैः करैः ।
२४] समावृण्वते नेत्राणि तुष्टा गमनकाङ्क्षिणः ॥१४॥ [१२
N] ततस्तान् वानरान् सर्वांस्तापसी धर्मचारिणी ।
उत्तार्य विषमात् तस्मात् समाश्वास्येदमब्रवीत् ॥१५॥ [१४
२६] एष विन्ध्यो गिरिः श्रीमानेष सेव्यो महाऽचलः ।

---

१. म—पुत्रार्थे ।
२. म—दैववि० ।
३. रा अ—† ०धारिते ।
४. ल₂—† जीविता ।
५. रा ल₁ व—प्रभावेण ।
६. कै ल₂—० मैर्माज० ।
व ल₁ श—०मैर्मार्गणेन ।
अ—‡ ० मैर्मोर्ज० ।
म—‡ ० मैर्मर्ग० ।
७. कै रा ल₁व म ल₂श—नास्ति ।
८. ल₂—† सुकुमाराङ्गुलैः ।
९. कै—‡ समावृणंतु ।
अ भ - समावृण्वंश्च ।
म—समावृण्वंतु ।
च—‡ समावृण्वं स्व० ।
ल₂—समावृण्वंति ।
१०. ल₁ व—ब्रह्मचारिणी ।
११. ल₂—† विधिः ।
१२. अ च—† ०श्चैषमहाचलः ।
ल₂—सर्वो महाचलः ।

एष प्रस्रवणः शैले एष पार्श्वे महोदधिः ॥१६॥ [१९
२७] स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरोत्तमाः।
२८पू] इत्युक्त्वा तद् बिलं श्रीमत् प्रविवेश यशस्विनी ॥१७॥ [१६

बिलं तु तद् वै तपसा स्वयंप्रभा
प्रविश्य धर्मेण तथा तपस्विनी।
N] स्थले तु तस्मिन् हरयो व्यवस्थिताः
कराग्ररुद्धैर् वदनैः समागताः ॥१८॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे बिलनिष्क्रमणं नाम
चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

१. कै रा अ च—श्रीमानेष।
२. रा—† श्रीमान्।
३. ल$_2$—† बिले।
४. कै—† स्थली।
५. ल$_2$—इति।
६. ल$_1$ ब म ल$_2$ श—किष्किन्धा०।
म च—नास्ति।
७. कै—अ च—० निष्क्रमणो।
म—‡ विवर०।
ल$_2$—विनिष्क्रमणो।

वानरास्तु महावीर्या हस्तरुद्धमुखाः स्थिताः ।
१] मुहूर्तेन कालेन चक्षूंष्युन्मील्य सङ्गताः ॥१॥ [१६
ततस्ते ददृशुर् घोरं समुद्रं वरुणालयम् ।
२] अपारमिव गर्जन्तं महोरगनिषेवितम् ॥२॥ [१७
३पू] ततस्तं देशमागम्य सौम्यं वितिमिरं शुभम् ।
N] अवगच्छन्त निष्क्रान्तं सुग्रीवस्य प्रतिश्रुतम् ॥३॥ [N
N] मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ।
४उ ] स नो मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥४॥ [१८
ते विन्ध्यस्य गिरेः पादे चित्रपुष्पितकानने ।
५] उपविश्य महाकायाश् चिन्तामापेदिरे तदा ॥५॥ [१९
ततः पुष्पातिभारोरांस् तांन् लता-शतसमावृतान् ।
N] दृष्ट्वा वासन्तिकान् वृक्षान् बभूवुर् भयविक्लवाः ॥६॥ [२०
ते वसन्तमनुप्राप्तं प्रतिवेद्य परस्परम् ।
N] नष्टसन्देशकालार्था निपेतुर्धरणीतले ॥७॥ [२१
ततः पीनायतस्कन्धः सिंहर्षभभुजो बली ।
६] युवराजोऽङ्गदो नाम ततो वचनमब्रवीत् ॥८॥ [२२

---

१. छ$_1$ व छ$_2$—+ स मुहूर्तेन ।
२. अ छ$_2$—‡ चक्षुंष्यु० ।
३. म—ततस्ते ।
४. छ$_1$ व म दा—० मागत्य ।
५. कै अ व म छ$_2$ दा म—
‡ अवगच्छतं । व—+ अवगच्छतु ।
६. म—+ मयस्य ।
७. कै रा छ$_1$ अ व म छ$_2$ दा—
० वासिह० । व—निहितं ।
८. म—राज्ञः ।
९. म—ततः ।
१०. कै रा छ$_1$ व म छ$_2$अ व—
०तिभारार्ताम् ।
११. कै रा छ$_1$ व म छ$_2$ अ—
लतावृतिस० ।
अ व—०लतावृतस० ।
दा—०लतावृतिस० ।
१२. म—प्रतिपद्य ।
१३. कै रा छ$_1$ अ व म छ$_2$ दा—
ते वसन्तमहं दृष्ट्वा राजभीतिवशा भयात् ।
अथाङ्गदो महाप्राज्ञस्ततो वचनमब्रवीत् ॥

---

१—अ—वसन्तोत्सवं । दा—वसन्तमहो ।

शासनं कपिराजस्य पूर्णे मासि निवर्तितुम्[१] ।
७] स च पूर्णो बिलेऽस्माकं निबोधध्वं प्लवङ्गमाः ॥[२]९॥[२४
९पू] तीक्ष्णः प्रकृत्या सुग्रीवः पितृव्यो मम वानराः ।[४] [३०पू
N] राघवार्थे स्वकान् प्राणांस् त्यजेच्चैवं[५] न संशयः । [N
९उ] क्षमिष्यति स नास्माकं[६] व्यतिक्रममिमं प्रभुः ॥१०॥ [३०उ
न हि शाम्यति सुग्रीवः कर्म घोरमिदं कृतम् । [N
१०] सीताऽधिगमनेऽस्माभिः[७] पापमेवागमिष्यति ॥११॥ [३१पू
प्राप्तदोषा वयं सर्वे साधु प्रायमुपास्महे । [N
११] त्यक्त्वा दारांश्च मित्राणि धनानि च गृहाणि च ॥१२॥[३१उ
स चास्मान् घातयेद् राजा पश्चाद् प्रतिगतानितः ।
१२] वधेनाप्रतिरूपेण मृत्युः श्रेयानिहैव नः ॥१३॥ [३२
न चाहं यौवराज्येन[८] मंते[९] तस्याभिषेचितः ।
१३] सुग्रीवो यदि नोक्तः स्याद् रामेणाक्लिष्टकर्मणा । [३३
N] अङ्गदः परिपाल्यस्ते हतेऽस्मिन् स्यामहं हतः[१०] ॥१४॥ [N
स पूर्वबद्धवैरो मामिमं दृष्ट्वा व्यतिक्रमम् ।
१४] घातयिष्यति दण्डेन तीव्रेण ससुहृज्जनम् ॥१५॥ [३४
किं मे सुहृद्भिश्च समं पश्यतो जीवितान्तकम् ।

---

१. म—०वर्तां ।
२. ल$_2$—सु ।
३. म—अतः परमधिकः पाठ—
सोऽहं व्यतीतसमये सुग्रीवस्य महात्मनः ।
इह प्रायोपवेशं नः प्रथमं मन्येऽद्य वानराः ॥
४. कै रा ल$_1$ अ ब म ल$_2$ रा च—
क्वापि ।
५. रा—त्यजंश्चैव । ब—त्यजे चैव ।
६. अ भ च—नोऽस्माकं ।
७. ल$_2$—०नेऽस्माकं पापमेव गमि० ।
८. ल$_2$—‡ यौवराजेन
९. ल$_1$ ब म—‡सते ।
१०. कै ल$_1$—† मतः । ब—† गतः ।
ल$_2$—ततः ।

१५] इहैव प्रायमासिष्ये रम्ये सागररोधसि ॥१६॥ [१५
एतच्छ्रुत्वा तु वचनमङ्गदस्य मुखाच्च्युतम् ।
१६] सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥१७॥ [१६
तीक्ष्णः प्रकृत्या सुग्रीवः प्रियार्थं राघवस्य तु ।
१७] अस्मानकृतकार्यांश्च सम्पूर्णे समयागमे ॥१८॥ [१७पू
अदृष्टायां च सीतायां दृष्ट्वाऽस्मांश्चागतान् पुनः । [१७उ
१८] राघवप्रियकारार्थं वधिष्यति न संशयः ॥१९॥
न क्षमन्त्यपराधीनां प्रधानानां नराधिपाः । [१८
१९] प्रधानभूताश्च वयं सुग्रीवस्य मताः सदा ॥२०॥ [१९पू
२०उ] भयार्दितानां तेषां तु प्लवगानां महात्मनाम् ।
उवाच वाक्यं तारेयस्तत्कालसदृशं वचः ॥२१॥ [४०पू
२१] विषादस् त्यज्यतामेष सर्वैरेव प्लवङ्गमैः ।
प्रविशामो बिलं दुर्गं यस्मादद्य विनिःसृताः ॥२२॥ [४०उ
२२] यदि वा रोचते वाक्यं ममेह हरिपुङ्गवाः ।
क्रियतां किं विमृष्टेन श्रेयो ह्युपदिशाम्यहम् ॥२३॥ [N
२३] दुर्धर्षं च महच्चैव बहुभक्ष्यं च वानराः ।

---

१. ल२ भ च—‡ ० माशिष्ये ।
२. रा ल२—† ० मब्रवीत् ।
३. भ च—च ।
४. कै रा ल१ अ ब म ल२ रा— ० तकार्यास्तु ।
५. भ—सम्पे कृते ।
६. ल२—च ?
७. रा ल२—० स्मांश्च गतान् । ल२—]स्मां तु गतान् ।
८. ल१ ब म—० कार्यार्थं । कै रा ल१ अ ल२—० कामार्थं ।
९. कै रा ल१ अ ब म ल ग च— ० पराधानि ।
१०. म—वरं ।
११. कै रा ल१ ब म ल२ श— प्लवङ्गमाः ।
१२. अ भ च—† प्रविशामि ।
१३. श—क्रियते ।
१४. कै रा ल१ अ ब म ल२ रा— विमृष्टेन ।
१५. कै—श्रेयो ह्यु० । रा—श्रियो ह्यु० ।

तमस्त्वान् नो न शक्ता हि द्रष्टुं सेन्द्रा अपि देवताः ॥२५॥[४१पू
२४पू] किं पुनो राघवो राजा लक्ष्मणो वाऽपि वीर्यवान्।
२४उ] सुग्रीवो वानरेन्द्रो वा नो वा सर्वे वनौकसः ॥४५॥ [४१ उ
संश्रुत्य वाक्यं हि तदाऽङ्गदस्य
प्रोचुश्च सर्वे हरयः समेताः।
यथा न हन्येम तथा विधानं
२६] विधीयतां संश्रयिताः स्म(?)सर्वे ॥२६॥ [४२

इत्यार्षे रामायणे किष्किन्धाकाण्डे अंगदबोधनं नाम
पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

१. कै छ$_1$ ब म—शक्नोति।
अ—शक्ता देवता।
रा छ$_2$ श—‡ °न्द्रापि देवताः।
२. छ$_1$—पुनः। छ$_2$—पुरा।
३. छ$_2$—+ नौ।
४. कै—‡ वनौकसाः।
५. कै छ$_2$—च।
६. म—स।
७. छ$_2$—इति।
८. छ$_1$ ब म श—विधीयता°।
अ—°धानमन्ये विधियते।
म च—नास्ति।
९. छ$_2$—वानरवाक्यं।

१पू] तथा वदति तारेये ताराऽधिपतिवर्चसि । [१पू
N] अवमन्य तु तद्वाक्यं गदुक्तं तेन संसदि ॥१॥ [N
५उ] अभिसन्धातुमारेभे हनुमानङ्गदं ततः । [५उ
१उ] अथ मेने हृतं राज्यं हनुमानङ्गदेन तु ॥२॥ [१उ
N] अयुक्तं व्याहृतं तेन श्रुत्वा तत् पवनात्मजः । [N
बुद्ध्या चाष्टाङ्गया युक्तं नेयतेजःसमन्वितम् ।
२] चतुर्दशगुणं मेने हनुमान् वालिनः सुतम् ॥३॥ [२
आपूर्यमाणं यशसा तेजोबुद्ध्या समन्वितम् ।
३] शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥४॥ [३
बृहस्पतिसमं बुद्ध्या विक्रमेण समं पितुः ।
४] शुश्रूषमाणं तारेयं गुरोरिव पुरन्दरम् ॥५॥ [४
५पू] भर्तुरर्थे पराक्रान्तैः सर्वशास्त्रविशारदैः । [५पू
N] आबभाषे दृढमतिर् नयाय नयकोविदः ॥ ६ ॥ [N
स चतुर्णामुपायानां तृतीयमुपदर्शयन् ।

---

१. कै रा ल१ ब म ल२ श—वदा ।
२. रा—‡ •सांधातु• ।
३. ब ल२ च—हनूमा• ।
४. म—वचः ।
५. श—क्तं ।
६. ल२—तद्• ।
७. ल२—नास्ति ।
८. म च—ङ्गाद्य• ।
९. श—नयेन च सम• ।
१०. ल२—नास्ति ।
११. च—हनू• ।
१२—म—नास्ति ।
१३. कै—‡ वरमा• ।
१४. कै रा ल१ अ ब म ल२—‡शुश्रूषमा• ।
१५. ल२—† •तुरर्थपरा• ।
श—† •र्थे पराक्रांता ।
१६. श—† • विशारदा ।
१७. म—अभिसंधातुमारेभे हनुमानङ्गदं ततः ।

६] भेदयामास सर्वांस्तान् वानरान् वाक्यसंपदा ॥७॥ [६
तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् ।
७] भीषणैर्बहुभिर्दृष्ट्यै शिक्षापदसमन्वितैः ॥ ८ ॥ [७
त्वं समो वानरः पित्रा युधि तारेय विक्रमैः ।
८] दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥९॥ [८
नित्यमस्थिरचित्तत्वाव कपयः कपिकुञ्जर ।
९] नाज्ञां ते प्रसहिष्यन्ति पुत्रदारैर्विनाकृताः ॥१०॥ [९
त्वय्येते नानुरक्षे(ज्ये)युः प्रत्यक्षं प्रवदामि ते ।
१०] यथाऽहं तारनीलौ च सम्मतौ न पितुस्तव ॥११॥ [१०
न ह्यहं न च ते सर्वे सामदानार्थभेदनैः ।
११] दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥१२॥ [११
नं विग्रहं समं प्राहुर् दुर्बलस्य बलीयसा ।
१२] आत्मरक्षाकरीं तस्माद् बुद्धिं गृह्णाति दुर्बलः ॥१३॥ [१२
यथात्र मन्यसे मे स्थातुं बिले मयविनिर्मिते ।
१३] तत्र लक्ष्मणबाणानां सुकरं प्रविदारणम् ॥१४॥ [१३
१४पू ] स्तोकं हि कृतमिन्द्रेण वज्रेणात्र विदारणम् ॥१५॥ [१४पू

---

१. ल$_{२}$—सर्वसंपदा ।
२. कै रा म ल$_{१}$ शा —०भाषयदङ्गदं ।
३. ल अ ब भ च—भीषणेर् ।
४. कै रा ल$_{१}$ ब म ल$_{२}$ शा भ—०दृष्टैः ।
५. कै ल$_{१}$ ब ल$_{२}$—‡ सेक्षाप० । शा—† सेनाप० । म—† साक्षेपा० ।
६. ब म—सर्वो ।
७. कै—† विक्रमः । शा—सर्वो ।
८. कै ल$_{१}$—† ० भेदने ।
९. अ भ च—चायुधैः ।
१०. कै ल$_{२}$—०पि कपि० ।
११. च—नहि ।
१२. कै रा ल$_{१}$ अ ब म ल$_{२}$—यथाऽत्र । शा—† यथाऽसि ।
१३. कै रा ल$_{१}$ अ ब म ल$_{२}$ शा—मन्यते ।
१४. भ—०नामीषत्कार्यं । अ च—† ०णां सुकरः ।
१५. शा—प्राविशा० । भ च—विदारणे ।

N] वल्लोकसारमिन्द्रस्य पुरं सुरगणैर् हतम् । [N
१४ उ] लक्ष्मणो निशितैर् बाणैर् भिन्द्यात् पत्रपुटं यथा॥१६॥ [१४ उ
वज्रमेकं सुरेशस्य सर्वशत्रुनिबर्हणम् । [N
१५] लक्ष्मणस्य तु नाराचा बहवः सन्ति तद्विधाः॥१७॥ [१५पू
अथः स्थातुं महाबाहो यदेवात्र त्वमेष्यसि ।
१६] तदैव बहवः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥१८॥ [१६
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना भयातुराः ।
१७] खेदितां दुःखशय्याभिः त्वां करिष्यन्ति पृष्ठतः॥१९॥ [१७
स विहीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः ।
१८] तृणादपि भयोद्विग्नः स्पन्दमानो भविष्यसि ॥२०॥ [१८
ने हि जातु न हन्युस् त्वां रामलक्ष्मणसायकाः ।
१९] अपवृत्तं महावेगाः शक्राशनिसमस्वनाः ॥२१॥ [१९
अस्माभिस्तु गतं सौर्ध्वं विनीतवदुपस्थितम् ।
२०] आनुपूर्व्यादथ सुग्रीवः स्वराज्ये स्थापयिष्यति॥२२॥ [२०
धर्मकामः पितृव्यस्ते पुत्रकामो दृढव्रतः ।

---

१. क$_{1}$ व—वल्लोक० ।
[क$_{2}$—वल्लोकसारमिंद्रेण ।
म च—] वल्लोक० ।
२. रा—सुरसु० ।
३. च—वीरेर् ।
४. कै रा क$_{1}$व म क$_{2}$श—तारेय ।
५. च—] यदा: ।
६. म च—अधस्थातुं ।
७. कै रा म व च क$_{2}$—खेदतो ।
क$_{1}$ म श—खेदितो ।
८. रा—स्पर्धमा० ।
म—स्पन्दमा० ।
९. म—ते ।
१०. कै रा क$_{1}$व म क$_{2}$च—
निसमप्रभाः ।
म च—वज्राशनि० ।
म—वज्राशनि० ।
११. क$_{1}$ व म श—ने सार्ं ।
१२. कै रा क$_{1}$ व म क$_{2}$ श—
दुर्भूकामो ।

२१] शुचिः सत्यप्रतिज्ञश्च नेस जाड्यं करिष्यति ॥२३॥ [२१
प्रियकामश्च ते[2] भ्रातुम् तदर्थं तस्य जीवितम् ।
२२] तस्यापत्यं हि[3] नास्त्यन्यस्तस्मादङ्गद गम्यताम् ॥२४॥ [२२
सर्वेषामेव दुःखोऽयं ततोऽस्त्यभ्यधिकं तु किम् ।
N] अपराधं भवेद् येन बिलं त्वं संप्रवेक्ष्यसि ॥२५॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमद्वाक्यं नाम
षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

१. छ₁—न स राज्यं ।
  म—न च त्वां जातु शातयेत् ।
२. रा—+ मे ।
३. म च—च ।
४. म—नास्त्यन्यत् त० ।
५. म—भवितात्यधिकं नु ।
६. रा—श्रीरामा० ।
७. ल च म श—किष्किन्धा० ।
  म—नास्ति ।
८. म—नास्ति ।

श्रुत्वा तु हनुमद्वाक्यं प्रश्रितं धर्मसंहितम् ।
१] स्वामिसत्कारसंयुक्तमङ्गदः प्रत्युवाच ह ॥१॥ [१
धैर्यं धर्मो यशः शौर्यमानृशंस्यमथार्जवम् ।
२] विक्रमश्चैव सत्यं च सुग्रीवे नोपपद्यते ॥२॥ [२
कथं धर्मान् स जानीते भ्रातरं पूर्वजं हि यः ।
३] अश्मना पर्यरुन्धीत विश्वासानुगतं पुरा ॥३॥ [४
भ्रातुर् ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् ।
४] धर्मतो मातरं यस्तां स्वीकरोति जुगुप्सितः ॥४॥ [३
सखा पाणिगृहीतश्च कृतकर्मा महायशाः ।
५] न स्मृतो राघवो येन स कस्य सुकृतं स्मरेत् ॥५॥ [५
लक्ष्मणस्य भयाद् येन नाधर्मभयभीरुणा ।
६] आदिष्टा मार्गितुं सीतां स कस्य सुकृतं स्मरेत् ॥६॥ [६
तस्मिन् पापे कृतघ्ने च स्मृतिहीने दुरात्मनि ।
७] आर्यः को विश्वसेत् प्राज्ञः सत्कुलीनो जिजीविषुः ॥७॥ [७
न चाहं यौवराज्येऽस्मिन् सुग्रीवेणाभिषेचितः ।
८] राघवेणाभिषिक्तोऽहं रामेणाक्लिष्टकर्मणा ॥८॥ [८
राजपुत्रं प्रतिष्ठाप्य सगुणं वोऽपि निर्गुणम् ।

---

१. अ म च—भ्रष्टं ।
२. म—धर्मात्मता ।
३. म च—+ सत्यम ।
४. दै—वि···सानुगतं ।
 ल₂—विश्वसानुगतं ।
 दा—विश्वसानुगत ।
५. दा म—+ जीवितो ।
६. म—लक्ष्मणेन ।
७. ल₂ म—सीता ।
८. म—नास्ति ।
९. अ म च—सत्कुलीनो ।
 म दा—सत्कुलीनो ।
१०. दा—०पो हि ।
११. अ—चापि ।

८] स कथं तु कुलीनं मां पितृव्यो जीवयिष्यति ॥९॥ [८
भिन्नमन्त्रो विरुद्धश्च तथागुणकथां ब्रुवन् ।
९] किष्किन्धां प्राप्य जीवेयं सुग्रीववशगः कथम् ॥१०॥ [९
उपांशुदण्डेन हि मां बन्धनेनावसादयेत् ।
१०] शठः क्रूरः कृतघ्नश्च सुग्रीवो राज्यकारणात् ॥११॥ [१०
बन्धने योजयत्यस्माच्छ्रेयः प्रायोपवेशनम् ।
११] अनुजानीत मां सर्वे गृहान् गच्छत वानराः ॥१२॥ [११
गमिष्यामि न तत्राहमकृतार्थः कदाचन ।
१२] इहैव प्रायमासिष्ये श्रेयो मरणमेव मे ॥१३॥ [१२
अभिवादनपूर्वं तु जनः कौशल्यमुच्यताम् ।
१३] वाच्यस्तातो यवीयान् मे सुग्रीवो वचनान्मम ॥१४॥ [१३ ख
आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ।
१४] मातरं चापि मे तारामाश्वासयितुमर्हथ ॥१५॥ [१४
१५पू] प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी । [१५पू
N] बहुभिर् मधुरैर् वाक्यैः शोकप्रणोदनैः शुभैः ॥१६॥ [N
N] भर्तृहीना विवत्सा च शोकार्ता दुःखभागिनी । [N

---

१. ब—कुलीनः ।
ल१—† पितृव्य ।
भ—तत्कुलीनं ।
२. ल१ ब म य—०किष्किन्धां ।
३. म—नास्ति ।
४. रा ब—† बंधेन मा० ।
५. म—नास्ति ।
६. अ च म—‡ ०योजयेत्तस्मात् श्रेयः ।
७. अ म च—कथंचन ।
८. कै अ म च—०मासिष्ये ।
९. कै—वा ।
१०. कै रा ल१ ब म ल२ य—जनकौशल्य० ।
११. कै रा ल१ ब म ल२ य—† ० स्ततो ।
१२. कै रा—च सा ? ।
ल१ ब म ल२ य—तु सा ।
१३. रा—शोकविच्छदुरैः ।
१४. च—भर्तृहीना ।
१५. म—भागती ।

१६ उ] विनष्टं मामिह श्रुत्वा व्यक्तं हास्यति जीवितम् ॥१७॥ [१६ उ
एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ।
१६] संविवेशाङ्गदो भूमौ रुदन् दर्भेषु दुर्मनाः ॥१८॥ [१६
तस्य संविशतः श्रुत्वा वचनं हरियूथपाः ।
१७] नयनेभ्यः प्रमुमुचुः शोकजं वारि दुःखिताः ॥१९॥ [१७
सुग्रीवं चापि निन्दन्तः प्रशंसन्तो हि वालिनम् ।
१८] परिवार्याङ्गदं सर्वे विविशुः प्रायमासितुम् ॥२०॥ [१८
निश्चयं वालिपुत्रस्य विज्ञाय हरिपुंगवाः ।
१९] उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् ॥२१॥ [१९
२०पू] दक्षिणाग्रेषु दर्भेषु कृत्वा चोत्तरतः शिरः । [२०पू
N] ते दीनमनसः सर्वे रुदन्तो हि पृथक् क्षितौ ॥२२॥ [N
२० उ] तमेवानुमरिष्यन्तः सर्वे संविविशुस्तदा । [N
स संविशद्भिर् बलिभिर् महीधरो
महाऽद्रिशृङ्गप्रतिमैः प्लवङ्गमैः ।
बभूव सन्नादितकन्दरान्तरो
२१] भृशं नदद्भिर् जलदैरिवोष्णगे ॥२३॥ [२१

इत्यार्षे रामायणे किष्किन्धाकाण्डे प्रायोपवेशनं नाम
सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

१. म—† चापि । ळ$_2$—† चापि ।
२. रा—† चाभि० । म च—चापि ।
३. अ च—निर्दुःखाः ।
४. रा—०ष्योपि । म—०तम ।
५. कै—‡ सर्वेचाप्यो० ।
६. कै अ म च—०मासितुं ।
७. म च—हरियूथपाः ।
८. श—दीन० ।
९. ळ$_2$—प्राङ्मुखाः समुपाविशन् ।
१०. ल च म श—सन्नादितकंदरो भृशं ।
११. रा म—०रिवोष्णगैः ।
१२. रा—इत्यार्षे श्रीरा० ।
ळ$_2$—इति रा० ।
१३. रा ल$_1$ च म श—किष्किंधा० ।
म च—नाशित ।

उपविष्टाश्च ते प्रायें[1] सर्वे तस्मिन् महीधरे ।
१] हरयो गृध्रराजोऽथ तं देशमुपचक्रमे ॥ १ ॥ [१
N] स गुहाया विनिर्गम्यं[2] विन्ध्यस्य शिखरे स्थितः । [N
संपातिर् नाम वेगेन दीर्घजीवी विहंगमः ॥ २ ॥
२] भ्राता जटायुषः शूरः प्रख्यातबलपौरुषः । [२
कन्दरादभिनिर्गम्य स विन्ध्यस्य गिरेर्द्विजः ॥३॥
३] उपविष्टान् हरीन् दृष्ट्वा संहृष्ट इदमब्रवीत । [३
विधिः किलै परो लोके विधिनैवोपपद्यते ॥ ४ ॥
४] यथेदं विहितं[4] भक्ष्यं मह्यं चिरमिहेप्सितमं[5] । [४
N] दैवेनं[6] विहितं नूनं भक्ष्यमेतदुपस्थितम[7] ॥ ५ ॥ [N
मांसं[8] वरोणां[9] खादिष्ये वानराणां मृतं मृतम्[10] ।
५] हृष्टोऽब्रवीच संपातिर् दृष्ट्वा तान् हरियूथपान् ॥६॥[11] [५
तस्य तद् वचनं श्रुत्वा विहगस्यामिषैषिणः ।
६] अङ्गदः परमायस्तो हनूमन्तमुवाच[12] ह ॥ ७ ॥ [६
पश्यै सीतां[13] प्रवादेन साक्षाद् वैवस्वतो यमः ।

---

१. अ भ च—† प्रायः ।
२. ल१ ब म शा—विनिष्क्रम्य ।
३. म—परिगतो ।
४. शा—विदितं ।
५. ल१ ब म—०मिहेषितं ।
ल२—०मिहोषितं ।
६. म—देवेन ।
७. ल१ ब म—† ०मेतमुपस्थितः ।
ल२ शा—† ०दुपस्थितः ।
८. च—मरं ।
९. च—वानराणां ।
१०. म—मृते मृते ।
११. कै रा ल१ ब म ल२ शा—
अतः परमधिकः पाठः—
एतावदुक्त्वा संपातिः प्रेक्षमाणः प्लवंगमान् ।
कै—,, ,, प्रेक्षमाणान् ,,
अ—,, ,, प्रेक्षमाणः ,,
च—,, ,, प्रेक्षमाणा ,,
१२. रा—हनुमंत० ।
१३. कै रा ल२ शा—पश्यस्वेतं ।
ल१ ब—पश्यस्वेदं ।
म—‡ पश्यमेतं ।

७] इमं देशमनुप्राप्तो वानराणां प्रिय[illegible]
रामस्य न कृतं कार्यं नो राज्ञो [illegible] कृतम् ॥९॥
८] हरीणामियमज्ञाता विपत्तिः सहसा कृता । [८
वैदेह्यां ह्रियमाणायां कृतं कर्म जटायुषा ॥१०॥
९] गृध्रराजेन यत् तत्र श्रुतं वस्तेन संशयः । [९
रावणेन नृशंसेन स तु प्राणैर् वियोजितः ॥११॥ [N
१०] यथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि ।
प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणांस्तथा वयम् ॥१२॥ [१०पू
११] रामस्यार्थे पराक्रान्ताः सर्वे संत्यक्तजीविताः ।
कान्ताराणि प्रविष्टाः स्मो न च पश्याम मैथिलीम् ॥१३॥ [१२
१२] धन्यः स गृध्रराजस्तु रावणेन हतो रणे ।
मुक्तश्च सुग्रीवभयाद् गतश्च गतिमुत्तमाम् ॥१४॥ [१३
१३] पितुर् मर्म विनाशाय जहार जनकात्मजाम् ।
राक्षसापसदो मूढः पौलस्त्यकुलपांसनः ॥१५॥ [N
१४] मृतान् मृतानयं पक्षी भक्षयिष्यति वानरान् ।

---

१. कै रा ळ$_1$ अ व म श म च— इदं ।
२. ळ$_1$—नास्ति ।
३. कै रा ळ$_1$ अ व म ळ$_2$ श— श्रुतं वस्तु न ।
च—श्रुतवांस्तु ।
४. ळ$_2$—सर्वे संजीविताः ।
श—स्मरं संजीविताः ।
५. रा—पश्यामि ।
६. च—† गतिमुत्तमां ।
७. श—पितुर्नाम॰ ।
८. कै ळ$_1$ व म ळ$_2$ श— ‡ राक्षसापसदो ।
रा † ॰पसब्दः ।
९. च—‡ ॰ पांसनः ।
१०. अतः परमधिकः पाठः—
अ म—
जटायुषो वाक्यमिदं नाशाद्दशरथस्य च ।
च—„ „ विनाशं „ „

N] धन्यः स गृद्धाधिपतिर् जटायुः परवीरहा ॥१६॥ [N

यो राघवार्थे निहतो रावणेन दुरात्मना ।[2]

N] पितुर्मम विनाशेन रामप्रव्राजनेनै च ॥१७॥ [N

१५ उ] हरणेन च वैदेह्या हर्यः संभ्रयं गताः । [१४उ

N] एकस्याः खलु कैकेय्याः कृते क्लिश्यन्ति वानराः॥१८॥ [N

सुदुष्करं कृतं कर्म कैकेय्या धर्मगर्हितम् ।

१६] यया समस्तं निहतं कुलमात्मा तथा वयम् ॥१९॥ [N

कैकेय्या हि कृते पापे शोकेन स गतो दिवम् ।

१७] सत्यसन्धः क्षितिपतिः पुत्रं संप्रेष्य दण्डकम् ॥२०॥ [N

N] यस्य रामस्य वसतो रावणेन हृता प्रिया ।

उपकारं हि कुर्वन्ति साधवः स्वजने सदा ॥२१॥ [N

१८] धन्यः स गृद्धाधिपतिर् जटायुः परवीरहा ।

१९पू ] यो राघवार्थे निहतो रावणेन पराक्रमी ॥२२॥ [N

सोऽन्विष्यंश्च महाऽरण्ये सुग्रीवेण समागतः ।

N] शूरो बाणेन चैकेन सर्वमर्माभिघातिना ॥२३॥ [N

निहत्य वालिनं रामः सुग्रीवमभिषिक्तवान् ।

N] सिद्धार्थं तं प्रत्यासन्नं काले शाखामृगेश्वरम् ॥२४॥ [N

---

१. अ म च—पराक्रमी ।

२. रा—नास्ति ।

३. कै ल$_1$ ब म ल—+ रामप्रवा० ।

४. ल$_1$ ब म ल$_2$ श—वानराः ।

५. ल$_1$—‡ क्लिश्यंति ।

६. कै रा अ ब म ल$_2$ श म च—यथा ।

७. कै ल$_1$ अ ब म च—+ संप्रेष्य । रा—‡ संप्रेष्य । ल$_2$—‡ संप्रेष्य ।

८. रा ल$_1$ ब म ल$_2$ श—दंडके । ल—दंडकैः ।

९. म—सोन्वेषंश्च । अ—‡ सोन्विषंश्च ।

१०. कै रा ल$_1$ ब म ल$_2$ श—च ।

११. कै ल$_1$ अ ब म ल$_2$ श—प्रत्यासंनं । रा—प्रत्यासन्नि । म—प्रत्यासन्नं ।

ततः संचोदयामास सीताऽन्वेषणतत्परः ।
N] ततो रामवचः श्रुत्वा सुग्रीवो वानरेश्वरः ॥२५॥ [N
विचीयन्तां दिशः सर्वाः सोऽस्मान्वै प्रेषयत् तदा ।
N] ते विचित्य दिशः सर्वा यथोद्दिष्टां नृपात्मजाम् ॥२६॥ [N
अदृष्ट्वा मैथिलीं सीतां भयात् प्रायमुपास्महे ।
N] त्यक्त-दार-सुहृद्वर्गास्त्यक्तसर्व-प्रियास्तथा ॥२७॥ [N
ते वयं नचिरात् कालाग्निराहारा बुभुक्षिताः ।
N] देहमुत्सृज्य यास्यामः प्रतिश्रयमिवापगाः ॥२८॥ [N
कुलान्येतानि कैकेय्या हतानि त्रीणि लीलया ।
N] वानराणां नराणां च पक्षिणां प्रवरस्य च ॥२९॥ [N
१९ ड] एतच्छ्रुत्वा ततो वाक्यमङ्गदस्य मुखाच्च्युतम् । [१८पू
भ्रातृस्नेहेन संपातिः सहसा व्यथितोऽभवत् ॥३०॥ [N
२०] प्रायं समुपविष्टांस्तांस् ततो गिरिगुहाशयः । [N
अब्रवीद् वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥३१॥ [१८ड
२१] को जटायुषमाख्याति प्राणैरिष्टतरं मम ।
N] हतं शूरमनार्येण मम संघट्टयन् मनः ॥३२॥ [१९
तदहं श्रोतुमिच्छामि विनाशं वानरर्षभाः ।
२२] भ्रातुर् जटायुषस्तस्य जनस्थाननिवासिनः ॥३३॥ [२२

---

१. ल$_1$ व—स चोद० ।
२. कै ल$_1$ ब म ल$_2$—‡विचेयंतां ।
रा—‡विचीयतं । श—‡ विचेयतां ।
भ—† विचीयतां ।
३. ल$_1$ म—नास्ति ।
४. अ म च—† विचित्य ।
म ल$_2$—च्युतिः ।

५. म ल$_2$—नास्ति । च्युतिः ।
च—द्वितीयतृतीयपादौ द्विः पठितौ ।
६. कै रा ल$_1$ ब म ल$_2$ श—तस्मात् ।
७. कै रा ल$_1$ ब म ल$_2$ श—
०रममार्गेण ।
८. कै रा ल$_1$ अ ब म श भ च—
संघटयन् ।
९. म श—नास्ति ।

कथं जटायुर् निहतः कश्च रामो जटायुषः । [N
२१] कथं वाऽऽसीज्जनस्थाने युद्धं राक्षसगृध्रयोः ॥३४॥ [२०पू
सुहृद् भ्राता जटायुर् मे यवीयान् हरिपुङ्गवाः ।
२४] हतः केन कथं तत्र कस्माद प्रायमुपाविशन् ॥३५॥ [N
यवीयसो गुणाढ्यस्य श्लाघनीयस्य विक्रमैः । [२१उ
२५] नामधेयमिदं भ्रातुश् चिरस्याद्य मया श्रुतम् ॥३६॥ [२०उ
N] तत्त्वमिच्छामि विज्ञातुं विनाशे वानराधिपाः । [N
तस्येष्टस्य मम भ्रातुः सखा दशरथो नृपः ॥३७॥
२६] यस्य रामः प्रियः पुत्रो ज्येष्ठः स सेहशो गुणैः । [२१
वनं प्रविष्टः स कथं भार्यया सह सीतया ॥ ३८ ॥ [N
२७] पृष्ठतोऽनुगतो भ्रात्रा लक्ष्मणेन महात्मना ।
कथं चापि हृता सीता केन वा हरिपुङ्गवाः ॥३९॥ [N
२८] कस्मिन् वा कारणे त्यक्ता एतदाख्यातुमर्हथ । [N
सूर्यांशुदग्धपक्षत्वान्न शक्नोमि विचेष्टितुम् ॥ ४० ॥
२९] इच्छेयमस्माद्गिरिप्राद् भवद्भिरवतारितुम् । [२४
N] समीपं समुपागम्य स्फुटं च परिभाषितुम् ॥ ४१॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे संपातिदर्शनं नाम
अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

१. अ म च—वासी- ।
२. कै ल२ म च—विनाशं ।
३. च—सखेर् ।
४. म—सर्वमेत० ।
५. च—मे तदाख्या० ।
६. म—‡ वचेष्टितुं ।
७. अ च—परिभाषणं ।
८. म—प्रान्तेऽपरहस्तेन ।
९. ल२—इति ।
१०. रा—श्रीरामायणे ।
११. ल च म रा—किष्किन्धा० ।
म च—नास्ति ।
१२. रा—संपातद० ।
१३. अ—नास्ति ।

## [बं—५७]= [ एकोनपञ्चाशः सर्गः ] = [दा०—५७]

शोकाद् भ्रष्टस्वरमपि श्रुत्वा ते हरियूथपाः ।

१] श्रद्दधुर् नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥१॥ [१

ते प्रायमुपविष्टाश्च दृष्ट्वा गृध्रं प्लवङ्गमाः ।

२] चक्रुर् बुद्धिं तथा घोरां सर्वान् नो भक्षयिष्यति ॥२॥ [२

अथवा प्रायमासीनान् यदि नो भक्षयिष्यति ।

३] कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥३॥ [३

एतां बुद्धिं ततः कृत्वा सर्वे वानरपुंगवाः ।

४] अवतार्य गिरेः शृङ्गाद् गृद्ध्रमाश्वासयंस्तदा ॥४॥ [४

N] समाश्वास्य ततो गृद्ध्रमीश्वरं पिशिताशिनाम् । [N

N] प्लवगेन्द्रात्मजः श्रीमानङ्गदः प्रत्युवाच ह ॥५॥ [N

८पू] राजा सर्वस्य लोकस्य इक्ष्वाकूणां महारथः । [७पू

राजा दशरथो नाम रथकुञ्जरवाजिमान् ॥६॥

N] तस्य पुत्रो गुणश्रेष्ठो रामो राजीवलोचनः । [N

८उ] रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनम् ॥७॥ [७उ

लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि सीतया ।

९] पितुर् वाक्यकरः श्रीमान् धर्म्यं पन्थानमाश्रितः ॥८॥ [८

N] वसतेस्तस्य रामस्य रावणो राक्षसेश्वरः । [N

---

१. रा—‡ ०स्वरमपि० ।
   ल$_2$—† ० स्वरमपि ।
२. च—‡ संस्थिताः ।
३. कै रा ल$_1$ च म ल$_2$ दा—नास्ति ।
४. कै ल$_2$ म—नास्ति ।
५. म च—† अवतीर्य ।
६. ल$_2$—† पत्रगेन्द्रा० ।
७. ल$_2$—‡ श्रीमानंगदः ।
८. कै रा ल$_1$ अ च म ल$_2$ दा म—
   ०रथवाजिनाम् ।
९. ल$_1$ च—सह । म—गुणिनाह् ।
१०. कै रा ल$_1$ च म ल$_2$ दा—
   धर्मपन्थान० ।
११. कै रा ल$_1$ च म ल$_2$ दा—सर्वत्र० ।

N] अकारणरिपुर् जातो विधिरेवात्र कारणम् ॥[1]९॥
१० उ] तस्य भार्या जनस्थानाद् रावणेन हृता छलात् । [८उ
१९पू] तां वयं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ॥१०॥ [१९ उ
रामस्याथ पितु र्मित्रं जटायुर् नाम धार्मिकः ।
११] ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ॥११॥ [९
रावणं विरथं कृत्वा मोक्षयित्वा च मैथिलीम् ।
१२] परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥१२॥ [१०
१३पू] एवं जटायुर् निहतो रावणेन बलीयसा ।
१४पू] सत्कृतश्चोपि रामेण गतः स्वर्गं न संशयः ॥१३॥ [११
५उ[ बभूव विरजा[2] नाम वानरेन्द्रः प्रतापवान्[3] ।
६उ] वानरप्रवरैः[4] श्रीमान् धार्मिको[5] तस्य चात्मजौ ॥१४॥ [५
सुग्रीवश्चैव[6] वाली च पुत्रौ वैवातुकावुभौ ।
७] लोके विश्रुतकर्माणौ राजा वाली तु मे पिता ॥१५॥ [६
१७ उ] ततो मम पितृव्येण‡ सुग्रीवेण महात्मना ।
चकार राघवः सख्यमवधीत् पितरं च मे ॥१६॥ [१२
१८] मम पित्रा विरुद्धं च सुग्रीवं सचिवैः सह ।
निहत्य वालिनं रामस्ततस्तं त्वभ्यषेचयत् ॥१७॥ [१३
१९] राज्ये चं स्थापितस्तेन सुग्रीवो वानरोत्तमः ।
राजा वानरमुख्यानां तेन च प्रेषिता वयम् ॥१८[11]॥ [१४

---

१. अ म च—नास्ति ।
२. अ म च—संस्कृत० ।
३. अ म च—विरजो ।
४. म—अतः परमधिक: पाठ:—
समार्य:पार्थिव:पक्षिन् धार्मिक:सुचिरात्मवान्
५. म च—वानर: प्रव० ।
६. श—सुग्रीवश्चापि ।
७. के रा छ, व छ₂ श म च—
‡ पितृव्येन ।
८. श—सख्यं सोऽवधीत् ।
९. के रा छ, व म श—
विरोधं च सुग्रीवस० ।
१०. अ म च—स राज्ये
छ₁—राज्ये सं० ।
११. म—नास्ति ।

२०] ते वयं दण्डकारण्यं विचित्य सुसमाहिताः ।
अज्ञानेन प्रविष्टाः स्म धरण्यां विवृतं बिलम् ॥१९॥ [१६
२१] मयस्य मायाविहितं वनं तद्धि विचिन्वताम् ।
व्यतीतस्तत्र नो मासो राज्ञा यः समयः कृतः॥२०॥ [१७
२२] तेन स्म कपिराजेन प्रेषिताः सर्वतो दिशम् ।
२३पू ] कृतां संस्थामतिक्रम्य भयात् प्रायमुपास्महे ॥२१॥ [१८
N] ते प्रायमुपविष्टाः स्म सुग्रीवभयमोहिताः । [N
२३ उ] अस्मदीयैः शरीरैस्त्वं कुरु कार्यं यथासुखम् ॥२२॥ [N]
क्रुद्धे हि तस्मिन् सुग्रीवे राघवे च सलक्ष्मणे ।
२४] गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥२३॥ [१९
N] एतत् सत्यं वचोऽस्माकं संपाते त्वं निशामय ॥२४॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे अनशनाख्यं नाम
ऊनपञ्चाशः सर्गः ॥ ४९ ॥

---

१. दा—०कारण्ये ।
२. म—धरण्या ।
म—आ१९ अस्य तृतीयपादादेरव आ२१ अस्य तृतीयपादान्तात् पाठो गलितः ।
३. म—विवृतं ।
४. च—विचिन्वता ।
५. ल$_1$ व म ल$_2$—राज्ञो ।
६. ल$_2$—इति ।
७. ल$_1$ व म दा—किष्किन्ध्य० ।
म च—नास्ति ।

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ।
१] अब्रवीद् वानरान् गृध्रो बाष्पगद्गदया गिरा ॥१॥ [१
मम भ्राता यवीयान् स जटायुर् नाम वीर्यवान् ।
२] समाख्यातो हतो युद्धे रावणेन बलीयसा ॥२॥ [२
वृद्धभावादपक्षत्वाच्छ्रुत्वा चापि तु मर्षये ।
३] न हि मे शक्तिरद्यास्ति भ्रातृहन्तारमर्दितुम् ॥३॥ [३
पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ । [४पू
४] तरुणौ प्राणवन्तौ च संहर्षाद् गगने प्लुतौ ॥४॥ [N
उदयादुदितं दीप्तं जपापुष्पसमोपमम् । [N
५] आदित्यमनुयाव्यैतौ(?तं) ज्वलन्तं रश्मिमालिनम् ॥५॥ [४उ
आवामादित्यमार्गे तु जवेनोपगतौ भृशम् ।
६] मध्यं प्राप्ते तु सूर्ये वै जटायुर् विषसाद ह ॥६॥ [५
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् ।
७] पक्षाभ्यां छादयाञ्चक्रे स्नेहात् परमविह्वलम् ॥७॥ [६
एवं प्रियो मया भ्राता वीर्ययुक्तेन रक्षितः ।
N] दह्यमानं स्वयं स्नेहादात्मानं नोपलक्षये ॥८॥ [N

---

१. अ—बाष्पसंविग्नया ।
म च—बाष्पसंविग्नया ।
२. रा ळ$_1$ व ळ$_2$—समाख्यातो० ।
म च—समाख्यातं हतं ।
३. ळ$_1$ व—०शक्त्यापि ।
४. शा—भ्रातृहंतार० ।
५. कै रा म शा—वृत्रवधे ।
ळ$_1$ व—वृत्रवधे हतं ।
६. म—अंबरीद् ।

७. ळ$_1$—जया० ।
८. कै रा ळ$_1$ व म ळ$_2$ शा म—
०नुयावेतौ ।
९. अ म च—०त्यमार्गे ।
१०. म—मध्ये ।
११. म—‡ ०भिरर्दितं ।
शा - ०भिरीरितं ।
१२. म—मम ।

निर्दग्धपक्षः पतितः पर्वतेऽहं पराजितः ।
८] अस्मिन् विन्ध्ये वसन् भ्रातुः महर्षि नोपलक्षये ॥९॥ [७
एवमुक्तो जटायोस्तु भ्रात्रा तत्त्वानुदर्शिना ।
१२] युवराजो महाप्राज्ञः प्रत्युवाचेदमङ्गदः ॥१०॥ [८
संपाते दीर्घदर्शी त्वं घोरादस्मान्महाभयात् ।
१३] पाह्यस्मान् यदि जानीषे निलयं रावणस्य च ॥११॥ [९
पापस्यादीर्घदर्शस्य राक्षसस्य दुरात्मनः ।
१४] आसन्ने यदि वा दूरे यदि जानासि शंस नः॥१२॥ [१०
ततोऽब्रवीन्महातेजा ज्येष्ठो भ्राता जटायुषः ।
१५] आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥१३॥ [११
निर्दग्धपक्षः क्लिष्टोऽहं हतवीर्यश्च वानराः ।
१६] वाङ्मात्रेण तु रामस्य करिष्ये हितमुत्तमम् ॥१४॥ [१२
रामार्थं यदिदं कृत्यं तव कृत्यं प्रथमं मम ।
१८] जरया तु हृतं तेजः प्राणास्तु शिथिला मम ॥१५॥ [१४
तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
१९] ह्रियमाणा मया दृष्टा राक्षसेन्द्रेण जानकी ॥१६॥ [१५
क्रोशन्ती राम रामेति लक्ष्मणेति च सुस्वरम् ।
२०] भूषणानि निरस्यन्ती गात्राणि च विधुन्वती ॥१७॥ [१६
सूर्यप्रभेव शैलाग्रे'' तस्याः कौशेयमुत्तमम् ।

---

१. च—निर्दग्ध॰ ।
२. म—नाभ्यवादि ।
३. म—महात्मनः ।
४. रा म च—साक्षात्तु॰ ।
५. म—रामस्य ।
६. ग म च—कार्यं ।
७. कै—† शिथिला ।
८. छ₂—† तु वैदेही ।
९. छ₁ ग घ म छ₂ ग्र म च—सुस्वरं ।
१०. कै म—‡ विधुन्वती ।
११. रा—† शैलाग्रे ।
१२. ग घ म म च—॰ मद्भुतं ।

२१] असिते राक्षसे भाति महामेघे यथा तडित् ॥१८॥ [१७
अहं तु सीतां मन्ये वै रामस्य परिकीर्तनात् ।
२२] श्रूयतां चापि वक्ष्यामि निलयं रावणस्य च ॥१९॥ [१८
पुत्रो विश्रवसः साक्षाद् भ्राता वैश्रवणस्य च ।
२३] अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥२०॥ [१९
इतो द्वीपे समुद्रस्य सा मध्ये शतयोजने ।
२४] तत्र लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥२१॥ [२०
तस्यां वसति वैदेही पीतकौशेयवासिनी ।
२५] रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥२२॥ [२२
२६ उ] लङ्कायामभिगुप्तायां सागरेण समन्ततः । [२३उ
२६पू ] जनकस्यात्मजां तत्र सीतां द्रक्ष्यथ मैथिलीम् ॥२३॥ २३पू
२७पू ] संप्राप्य सागरस्यान्तं संपूर्णशतयोजनम् । [२४पू
N] त्रिकूटे पर्वते लङ्कां तत्र द्रक्ष्यथ मैथिलीम् ॥२४॥ [N
२७ उ] विक्रम्य दक्षिणं कूलं तत्र द्रक्ष्यथ रावणम् । [२४उ
तदर्थं त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः ॥२५॥
२८] ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ । [२५
आद्यः पन्थाः कुलिङ्गा(?गा)नां ये च वन्याश्रितैः परैः ॥२६॥
२९] द्वितीयो बलिभोक्तॄणां ये च वृक्षविले रताः । [२६

१. छ$_2$—च प्रवक्ष्यामि ।
२. छ$_1$ ब म छ$_2$ श—नास्ति ।
३. म—यतो ।
४. म—मध्ये ।
५. रा छ$_2$—० वासपि० ।
६. कै—† रक्षया ।
७. श—† प्रविशामि० ।
८. म—अत्र ।
९. म—कुलिङ्गानां ।
१०. छ$_1$ ब—‡ वान्या० ।
ग म च—वान्याश्रितः ।
११. छ$_1$—†परैः ।
१२. ग म—† बालिनो० ।
१३. छ$_2$—वृक्षवत ।
म—वृक्षाश्रये ।

मासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररास्तथा ॥२७॥
१०] श्येनाश्चतुर्थे दीयन्ते गृध्रा गच्छन्ति पञ्चमम् । [२७
बलवीर्योपपन्नानां रूपयौवनशालिनाम् ॥२८॥
११] षष्ठस्तु मार्गो हंसानां वैनतेयगतिः परा । [२८पू
१२पू] वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः ॥२९॥ [२८उ
N] अस्माकं विहितं तु स्याद् दिव्यं चक्षुर्बलं महत् । [N
१२ उ] गर्हितं च कृतं कर्म तेन स्म पिशिताशिनः ॥३०॥ [२९पू
इहस्थोऽहं च पश्यामि रावणं चापि मैथिलीम् ।
१३] अस्माकं गृध्रराज्ञां हि दिव्यं चक्षुर्बलं ध्रुवम् ॥३१॥ [२९
सोऽहमाहारलोभेन निसर्गेण च वानराः ।
१४] आयोजनशतं साग्रं सर्वं पश्यामि चक्षुषा ॥३२॥ [३०
अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः ।
१५] विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् ॥३३॥ [३१
उपायो दृश्यतां कश्चिद् तरणे लवणाम्भसः ।
१६] अभिगम्य तु वैदेहीं सिद्धार्थाः सन्निवर्त्स्यथ ॥३४॥ [३२
N] तेन विज्ञानयोगेन ब्रवीमि च प्लवङ्गमाः । [N
समुद्रं गन्तुमिच्छामि वानरा वरुणालयम् ॥३५॥

---

१. च—० श्चतुर्थे ।
२. छ$_1$—‡ ०र्षिमाः ।
३. अ भ च—तस्माद्० ।
४. अ च—०शालिनाः ।
५. भ—प्रपश्यामि ।
६. भ—तां च । च—‡ तान्स ।
७. रा भ—नास्ति ।
८. छ$_1$—‡ निसर्गेण ।
९. रा—नास्ति ।
१०. छ$_1$—‡ निसर्गेण ।
११. भ भ—पादमूले ।
१२. छ$_1$—‡० मयोषितां ।
१३. छ$_1$ च—† उपाये ।
१४. अ भ च—० [illegible] ।
१५. भ—† संति [illegible] ।
१६. अ भ च—केन ।

१७] प्रदास्याम्युदकं भ्रात्रे स्वर्गताय महात्मने । [१४
N] इति श्रुत्वा च तद्वाक्यं तेऽङ्गदप्रमुखास्ततः ॥[2] १६॥ [N
ते[3] तं नीत्वा समं देशं[4] पुण्यं नदनदीपतेः[5]।
१८] निर्दग्धपक्षं संपातिमवतार्य प्लवङ्गमाः ॥१७॥ [१५
प्रत्यानीय तु तं गृध्रं[6] तदा[7] भ्रान्ताः[8] प्लवङ्गमाः ।
१९] बभूवुर् वानरा हृष्टाः प्रवृत्तिमुपलभ्य ताम् ॥१८॥ [१६

इत्यार्षे[9] रामायणे किष्किन्धाकाण्डे[10] प्रवृत्तिलाभो नाम
पञ्चाशः सर्गः ॥ ५० ॥

---

१. ळ$_2$—०स्तथा ।
२. कै रा अ भ च—नास्ति ।
३. कै—‡ तं ना । रा—†तं नत्वा ।
अ च—तं नीत्वा च ।
रा ळ$_1$ ब भ ळ$_2$ द्दा—तं च तस्मात् ।
४. कै—† देशं पुण्ये ।
द्दा—पुण्यं तीरं ।
५. ब—नास्ति ।
६. कै रा ळ$_1$ अ ब भ ळ$_2$ द्दा च—० वनार्थं ।
७. ळ$_1$—† तद्वचः ।
८. द्दा—ते ।
९. रा—इत्यार्षे श्रीम० ।
ळ$_2$—इति ।
१०. ळ ब भ द्दा—किष्किन्धा० ।
अ—नास्ति ।

ततस्तदमृतास्वादं गृध्रराजसमीरितम् ।
२८] निशम्य वचनं हृष्टास्ते तदा प्लवगर्षभाः ॥ १ ॥ [१
जाम्बवांश्च हरिश्रेष्ठः सह सर्वैः प्लवङ्गमैः ।
२९] भूतलात् सहसोत्थाय गृध्रराजमिदोऽब्रवीत् ॥ २ ॥ [२
क्व सीता केन वा दृष्टा मैथिलीं को जहार ताम् ।
३०] सर्वमाख्याहि भद्रं ते गतिर् भव वनौकसाम् ॥३॥ [३
को दाशरथिबाणानां वज्रवेगप्रपातिनाम् ।
N] स्वयं लक्ष्यत्वमासाद्य वैवस्वतपथि स्थितः ॥ ४ ॥ [४
N] तच्छ्रुत्वा वचनं तस्य सीताश्रुतिसमाहितम् । [N
स हरीन् प्रीतिसंयुक्तान् सीताश्रुतिसमाहितान् ॥५॥
३१] भूयं आश्वासयन् साक्षात् तमेवार्थमभाषत । [५
श्रूयतां चेत वैदेह्या यथा मे हरणं श्रुतम् ॥ ६ ॥
३२] येनापि मे[10] समाख्यातं यत्र चायतलोचना । [६
अहमस्मिन् गिरौ दुर्गे योजनायुतविस्तृते ॥ ७ ॥
३३] चिरात्प्रपतितो गृध्रः क्षीणवीर्यपराक्रमः । [७
N] विपक्षः परिसर्पामि तीक्ष्णां दुर्गां वसुन्धराम् ॥८॥ [N
तन्मे योऽहरितः पुत्रः सुपार्श्वो[13] नाम वानरः ।

१. ब—+०[illegible] ।
२. ब छ$_1$—० मब्रवीत् ।
३. अ—क द्य ।
४. दा—स च ।
५. अ च—+ कथयोधि चासाद्य ।
म—कर्षाभिसंयुक्ते ।
६. दा अ च—०तिसमाधुतान् ।
७. छ$_1$ च अ छ$_2$—भूय आश्वासयत् ।
म—भूयसा० ।
८. अ भ च—यत्री ।
९. म—जात ।
अ च—+ तव ।
१०. अ भ च—येन चापि ।
११. दा छ$_1$ ब—तत्र ।
१२. छ$_2$—वसितवान् ।
१३. दा छ$_1$ च म—[illegible] ।

३४] आहारेण यथाकालं प्रीणाति पततां वरः [1]॥९[2]॥ [८
स कदाचित् क्षुधार्तस्य ममाहाराभिकाङ्क्षिणः ।
३६] गतसूर्येऽहनि प्राप्तः स तु सूनुर् गिराविह ॥१०॥ [१०
स मया वृद्धभावाच्च क्रोधाच्च पततां वरः ।
३७] क्षुत्पिपासापरीतेन कुमारः परिभर्त्सितः ॥११॥ [११
स ममाहारसंरोधाद् पीडितः प्रीतिवर्धनः ।
३८] अनुमान्य यथावृत्तमिदं वचनमब्रवीत् ॥१२॥ [१२
अहं तात यथान्यायमाँमिषार्थी समाप्लुतः ।
३९] महेन्द्रस्य गिरेर्द्वारं समावृत्य त्वधिष्ठितः ॥१३॥ [१३
स हि प्राणिसहस्राणां सागरोपरिचारिणाम् ।
४०] एको व्यवस्थितः पन्था महेन्द्र-गिरिवासिनाम् ॥१४॥ [१४

---

१. कै रा ल$_2$—पवितां ।
२. अतः परमधिकः पाठः—
कै रा ल$_1$ ब म ल$_2$ श च—
एककाले अनभ्यर्थे क्षुद्रयं तु पतत्रिणः ।
म—
एककाले अनभ्यर्थे हिमवन्तं जगाम सः ।
स मे भोजनमिच्छं समाचरन् मातृदर्शनात् ॥
भ—
एककाले अनभ्यर्थे हिमवन्तं जगाम सः ।
स मे भोजन मिच्छं समाचरन्मातृदर्शनात् ।
तीक्ष्णकामास्तु रागार्तास्तीक्ष्णकोपा भुजङ्गमाः
कुमारीं तु भवं तीक्ष्णं तात तीक्ष्णक्षुधा वयम् ॥
३. कै म श—महाहाराभि० ।
रा—समाहा० ।

४. म—† गतसूर्योऽहनि ।
५. कै रा ल$_1$ ब म ल$_2$ श—प्रेम्णा ।
६. म च—मम ।
७. रा—यथान्यायममाभि० ।
कै रा ल$_1$ भ ब म ल$_2$ श च—
यथान्यायमामिषार्थे ।
८. म ल$_2$—†सहस्रा हि सहस्राणां ।
९. म—सागरांबरचारिणां ।
ल$_2$—नास्ति ।
१०. कै रा ल$_1$ ब म ल$_2$ श—
व्यवस्थितश्च पंथानं ।
११. कै रा ल$_1$ भ ब म ल$_2$ श च—
प्रावृत्य गिरि० ।

सोऽहमेकायने मार्गे तवैवाहारकाङ्क्षया ।
N] स्थितः पन्थानमाहृत्य नागगन्धर्वरक्षसाम् ॥१५॥ [N
तत्र कश्चिन् मया दृष्टो नीलाम्बुदचयप्रभः ।
४१] समाहृत्याभिधावंस्तु स्त्रियमादाय कामपि ॥१६॥ [१५
स मामभ्यवहारार्थं संदृश्य कृतनिश्चयम् ।
४२] संमान्य मां च विधिवत् पन्थानं त्वभ्ययाचत ॥१७॥ [१६
न च याच्ञाऽभिपन्नानां महतां भुवि विद्यते ।
४३] नीचेष्वपि जनः कश्चित् किं पुनर्मद्विधा द्विजाः ʼ ॥१८॥ [१७
N] सोऽनुज्ञातो मयागच्छद् वायपर्थे मर्म स्पृशन् [N
न कश्चिदस्य पन्थानमाहृणोति नभस्तले ॥१९॥
N] महता तेजसा योʼ मांʼ तोषयन् निर्गतस्त्वतः । [N
स यक्षरक्षसां राजा रावणः प्रतिवेदितः ॥[12]२०॥
४८] हरन् दाशरथेर् भार्यां मैथिलीं जनकात्मजाम् । [२०

---

१. भ—तस्मिन् ।
२. कै रा ल$_1$ अ व म ल$_2$ श च—तवैवाहार० ।
३. कै—+ नीलांबुदचयप्रभः ।
ल$_1$ अ व म ल$_2$ श—नीलांबुद० ।
४. अ भ—समाहृत्याभ्यधावत ।
५. रा—मामुपपन्नानां ।
अ भ च—सामोपपन्नानां ।
६. कै रा ल$_1$ व म ल$_2$ श—मद्विधे द्विजे ।
भ—मद्विधो जनः ।
ल$_2$ श—मद्विधे द्विज ।
७. ल$_1$—वायपार्श्वे ।
८. ल$_1$ व म ल$_2$ श—समस्पृशत् ।
च—समस्पृशत् ।
९. भ—व्योम ।
१०. अ भ च—संक्षिपन्निव ।
११. अ भ च—वेगितः ।
१२. अ भ च—अतः परमधिकः पाठः—
ततोऽहं खेचरैर्भूतैरभिगम्य सभाजितः ।
दिष्ट्या जीवसि तातेति ह्यनुकम्पां महर्षयः ।
कथंचित्सकलत्रोऽसौ तेन स्वस्ति बभूव ते ।
ल$_1$ व म ल$_2$ श—तेजसा ।
१३. कै रा—प्रतिबोधितः ।
ल$_1$ व म ल$_2$ श—प्रतिबोधितः ।

रामलक्ष्मणयोर् नाम क्रोशन्तीं मुक्तमूर्धजाम् । [२१उ
४९] भ्रष्टाभरणकौशेयां वेगप्रस्ताङ्गविह्वलाम् ॥२१॥ [२१पू
एष कालात्ययस्तात इति धर्मभृतां वरः ।
५०] एतदर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् ॥२२॥ [२२
इति श्रुत्वा न मे काचिद् बुद्धिरासीत् पराक्रमे ।
५१] अपक्षो हि कथं पक्षी कर्म किञ्चिदुपक्रमेत् ॥२३॥ [२३
पक्षाभ्यामाहृतस्तेन रावणो मैथिलीं हरन् ।
२५] विचार्य युधि बुद्ध्या च धर्मापेक्षः च्युतो मम ॥२४॥ [N
अयुध्यन् स महावीर्यो रावणेन दुरात्मना ।
२६] पुत्रः सन्तर्जितो वाग्भिः कथं भोता न मैथिली ॥२५॥ [N
युष्मद्विलपितं श्रुत्वा तौ च सीताविनाकृतौ ।
२७] न मे दशरथस्नेहात् पुत्राणामन्तरोऽधिकः ॥२६॥ [N
N] तथा तु भूयो वक्ष्यामि भवतां पौरुषाश्रयम् ॥२७॥
स हि विश्रवसः पुत्रो भ्राता वैश्रवणस्य च । [N

---

१. के रा ल$_1$ अ ब म ल$_2$ श स्त्रम्० ।

२. अ म च—शोकवेगपरायणाम् ।

३. के रा ल$_1$ ब ल$_2$ श—† कालात्ययस्तात । म—‡ कालो गतास्यस्त ।

४. अ म—वच्छ्रुत्वा हि ।

५. म—† बुद्धिः सीता० ।

६. ल$_1$ श—† पक्षे ।

७. म—‡ नावधं ।

८. अ म च—युयुधे बुद्ध्या धर्मापेक्षी ।

९. के रा ल$_1$ ब म ल$_2$ च—अयुध्यत ।

१०. के रा ल$_1$ ब म ल$_2$ श—स तेजसैवाग्निः ।

११. के ल$_2$ श—† भ्राता ।

१२. के रा ल$_1$ ब म ल$_2$ श—मैथिलीम् ।

१३. के रा—पुत्राणामपराधिकः । ल ब ल$_2$—पुत्रेष्वस्ति स चाधिकः । म—पुत्रेष्वस्ति सदाधिकः ।

१४. के रा अ म ल$_2$ म च—† पुरुषाश्रयं ।

१५. ल$_2$—विलाहसः ।

N] अध्यास्ते[1] नगरीं लङ्कां रावणो राक्षसाधिपः ॥२८॥ [N

तीरे[2] द्वीपे समुद्रस्य संमग्रे[3] शतयोजने ।

N] तस्मिंल्लङ्का पुरी तस्य निर्मिता विश्वकर्मणा ॥२९॥ [N

N] तत्र सीता तु वसति भर्तृहीना तपस्विनी ।[4] [N

५३पू ] श्रूयतां यच्च वक्ष्यामि भवतां पौरुषाश्रयम् ॥३०॥ [२४उ

५२ उ] वाक्मतिभ्यामपि[5] सदा यतेयुः पुरुषर्षभाः ।

५३ उ] यत्तु दाशरथेर् दुःखं मम तन् नात्र संशयः ॥३१॥ [२५

यद्[8] भवन्तो महावीर्या महोत्साहा मनस्विनः ।

५४] सहिताः कपिराजेन देवैरपि दुरासदाः ॥३२॥ [२६

रामलक्ष्मणबाणाश्च निशिताः कङ्कवाससः ।

५५] त्रयाणामपि लोकानां समर्थास्तात निग्रहे ॥३३॥ [२७

कथं खलु दशग्रीवम् तेजोबलसमन्वितः ।

५६] भवतां तु समग्राणां कर्तुं किञ्चिन् न दुष्करम्[6] ॥३४॥ [२८

तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयैः ।[7]

५७] न हि कर्मसु सज्जन्ते[9] बुद्धिमन्तो जितेन्द्रियाः[10]॥३५[11]॥ [२९

---

१. म—यथास्ते ।

२. ळ₁—नास्ति ।

३. ळ₁—नास्ति ।

४. अतः परमधिकः पाठः—

ग ब—

वचनाच्चं मया कर्तुं बान्धवैः परिवर्जिना ।

म —वचनच्चं „ „ „

५. रा—। ०भ्यामभिस० ।

ग म ब—

‡ ० भ्यामपि हि मे संधेयुः ।

६. कै—किञ्चित्कर्तुं न० ।

रा म ब—‡न किञ्चित्कर्तुं दुष्करं ।

म—न किञ्चित्कर्म दुष्करं ।

ब—कर्तुं किञ्चिद्दुष्करं ।

७. रा—धर्मनिश्चय: ।

८. म—अतः परमधिकः पाठः—

तद्भवन्तो महावीर्या महोत्साहा महाबलाः ।

९. रा ब—मज्जन्ते ।

१०. ग म ब—मनस्विनाः ।

११. कै म रा—नास्ति ।

न चै वीर्यानुरूपं वो मौनं प्रायोपवेशनम् ।
५८] सत्त्व-विक्रम-गांभीर्य-रूपयौवनशालिनाम् ॥१६॥ [N
उत्तिष्ठत न युक्तं वः कृत्वा कार्यविनिश्चयम् । [N
५९] कृते पुरुषकारे हि मरणं नाभिजायते ॥१७॥ [N
स्थिरविनयविशालचक्षुषः
सदृशगजेन्द्रसमानवक्षसः ।
कुलबलमनुरूपमात्मनः
N] कुरुत न गर्हितमद्य विक्रमं च ॥१८॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे संपातिवाक्यं नाम
एकपञ्चाशः सर्गः ॥ ५१ ॥

---

१. अ म च—हि ।
२. कै रा म छ$_2$ छ म च—०वक्षसः ।
३. अ—द ०बाहैः ।
४. म—कुलचय चतु० ।
५. कै रा छ$_1$ च म छ$_2$ रा च—
०अद्य पर्वतीनः ।
म—०मद्य पतितं च ।
६. रा—इति श्री रामा० ।
छ$_2$—नास्ति ।
७. छ अ च म रा—किष्किन्धा० ।
म च—नास्ति ।

ततः कृतोदकं स्नातं गृध्रं तं हरियूथपाः ।
१] उपविष्टा गिरेः पृष्ठे परिवार्य समन्ततः ॥१॥ [१
तमङ्गदमुपासीनं निशाम्य हरिभिर् वृतम् ।
२] जनितप्रत्ययो हर्षात् संपातिः पुनरब्रवीत् ॥२॥ [२
कृत्वा निःशब्दमव्यग्राः शृण्वन्तु हरयो मम ।
३] तथ्यं संकीर्तयिष्यामि यस्माज् जानामि मैथिलीम् ॥३॥ [३
अस्य विन्ध्यस्य शिखरे पुराऽस्मि पतितो भृशम् ।
४] दाहदग्धपरीताङ्गो निर्दग्धैः सूर्यरश्मिभिः ॥४॥ [४
लब्धसंज्ञस्तु षड्रात्रात् संरुजो व्याकुलेन्द्रियः ।
५] वीक्षमाणो दिशः सर्वा नाभिजानामि किंचन ॥५॥ [५
ततस्तु सागरान् सर्वान् शैलांश्चैव वनानि च ।
६] सरांसि च नदीश्चैव चिन्तयन् स्मृतिमागतवान् ॥६॥ [६
हृष्टपक्षिगणाकीर्णः कन्दरोदरकूटवान् ।
७] दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति मे स्मृतिः ॥७॥ [७
अस्मिंश्चाप्याश्रमः पुण्यः सुरैरपि सुपूजितः ।
८] मुनिर् निशाकरो नाम तस्मिन्नुग्रतपा भवत् ॥८॥ [८

---

१. म—तं [illegible] ।
२. [illegible] रा ङ१, ब व म क श च—निशम्य ।
३. च—संपाति ।
४. म—[illegible] ।
५. म च—[illegible] ।
६. रा—† [illegible] ।
७. म—† वीक्षमाणो ।
८. रा—† स्मृतिरागमत् ।
म ङ२ म च—स्मृतिरागमत् ।
९. रा—† पुण्यश्चाश्रम० ।
१०. म—† ० [illegible] ।
११. रा—‡ महातपो० ।

अष्टौ वर्षसहस्राणि तेनाहमुषितः सह ।
९] स्वर्गतस्य शतं त्वेकं द्वे शते वसतो मम ॥९॥ [९
N] ततो गिरितटे ह्यस्मिन् दग्धपक्षतनूरुहः । [N
अवतीर्य तु गिर्यग्रात् कृच्छ्रेण विषमात् समाम् ।
१०] तीक्ष्णदर्भां वसुमतीं गहनां चाप्युपाक्रमम् ॥१०॥ [१०
तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् ।
११] सार्धं जटायुषा पूर्वं बहुशोऽभिगतो हि सः ॥११॥ [११
अभ्यासाच्चाश्रमे पुण्ये ववुर् वाताः सुगन्धिनः ।
१२] पुष्पवन्तः सदा वृक्षाः फलवन्तश्च सर्वशः ॥१२॥ [१२
उत्प्लुत्य चाश्रमद्वाराद् वृक्षमूलमुपाश्रितः ।
१३] द्रष्टुकामः प्रतीक्षेऽहं भगवन्तं निशाकरम् ॥१३॥ [१३
अथ पश्यामि दूरस्थमृषिं ज्वलिततेजसम् ।
१४] कृताभिषेकं दुर्धर्षमागच्छन्तमुदङ्मुखम् ॥१४॥ [१४
तमृक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाः ।
१५] परिवार्याभिगच्छन्ति मातरं प्राणिनो यथा ॥१५॥ [१५

---

१. ल, ब—+ अवतार्य ।
२. श—विषमात्समा ।
३. रा—+ तीक्ष्णदंतां ।
म—+ तीक्ष्णदर्भं ।
४. कै रा—‡ सु मुदुपाक्रमात् ।
ल, ब—+ ०हनां चाप्युपाक्रमत् ।
अ—कृच्छ्रात् समुपाक्रमत् ।
श—+ ०हनां चाप्युपाक्रमत् ।
५. म—+ सर्वे ।
६. रा—+ जटायुषः ।
७. ल,—नास्ति ।
८. रा—बहु ।
९. म—उत्पत्य,
१०. अ म च—चाश्रमद्वारं ।
११. ल,—नास्ति ।
१२. ल, ब—यथापश्यमहं० ।
१३. कै—+ समरा । रा—‡ सूकर० ।
१४. ल, ब म श—व्याघ्राः ।
१५. कै रा—परिवार्य तु ग० ।
अ च—परिवार्य तु ग० ।
ल,—परिवार्यानु० ।

१६पृ ] संप्राप्तं तं[1] मुनिं दृष्ट्वा तानि सत्त्वानि निर्ययुः ॥१६[2]॥ [१६पृ
ऋषिस्तु मेन्यं मां तूष्णीं प्रविवेशाश्रमं ततः ।
१७] स मुहूर्ताद् विनिष्क्रम्य ततः कार्यमपृच्छत ॥[4] १७॥ [१७
लोम्ना तु विकलं दृष्ट्वा नाभिजानाति मां मुनिः ।
१९] विनिर्दग्धावुभौ पक्षौ शरीरे च व्रणानि मे ॥१८[8]॥ [१८
ईदृशौ पक्षिणौ द्वौ तु मातरिश्वसमौ जवे ।
२०] गृध्रराजौ महावीर्यौ भ्रातरौ कामरूपिणौ ॥१९॥ [१९
तयोर्ज्येष्ठस्तु संपातिर् जटायुस्तु जघन्यजः ।
२१] ममाग्रहीतां चरणौ रूपमास्थाय मानुषम् ॥२०॥ [२०
ताभ्यां तुल्यं न पश्यामि जवेन च बलेन च ।
२२] विचिनोमि जगत् सर्वं तयोस्तुल्यो न विद्यते ॥२१॥ [N

---

१. अ म—उपर्षि ।
२. अतः परमधिकः पाठः—
अ च—प्रविष्टे भवनं वच (वचा) राज्ञः सामात्यकं वकम् ।
म—प्रविष्टस्येव भवनं राज्ञः सामात्यकं वकम् ।
३. ग—पश्चम् ।
४. म—नास्ति ।
५. अ म—कोशाय ।
६. कै टा म ल$_1$—† विफलं ।
७. अ—न स जानाति ।
ल—‡ नाभ्यजानाति ।
म श—न प्रजानाति ।
म—न स्मजानाति ।
च—नाभ्यजानात्स ।
८. अ म च—अतः परमाधिकः पाठः—
स मुहूर्ताद्विनिष्क्रम्य ततो वचनमब्रवीत् ।
९. अ म—अकल्यौ ।
१०. म ल$_2$ श—च ।
११. म—जटायुश्च ।
१२. कै टा—‡समगृहीतां ।
म—समगृहीतां

N] कस्त्वं कथमिदं दुःखं प्राप्तवानसि सांप्रतम् । [N
कस्ते व्याधिः समुत्पन्नः पक्षाणां पतनं कथम् ॥२२॥
२१] दण्डो वाऽयं कृतः केन सर्वमाख्यातुमर्हसि । [२१
N] दुःखितं त्वां समालक्ष्य मम प्रव्यथते मनः ॥२३॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे निशाकरमुनिदर्शनं नाम
द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

१. अ छ$_2$ म ब—+ कथमिमं ।
२. रा—कुतो ।
३. कै—कथं ।
म—कुतो ।
अ—कुतः ।
४. अ ब म—त्वां ।
५. रा—श्रीरामायणे ।
छ$_2$—इति ।
६. छ$_1$ ब म शा—किष्किन्धा० ।
म—नास्ति ।
७. कै रा अ म—निशाकरदर्शनं ।

६] खं समुत्पतितौ वेगाद् बहुनीलं नभस्तलम् । [३
१० व] जिज्ञासन्तावुभौ वीर्यमन्योन्यस्य जयैषिणौ ॥९॥ [N
७व] पणं स्वराज्यमुद्दिश्य कालस्य वशमागतौ । [N
७पू] कैलासशिखरे बद्ध्वा मुनीनामग्रतः पणम् ॥१०॥
रविर्नावनुगन्तव्यो यावदस्तमनोदयम् । [४
८] अथ वायुपथं प्राप्य पश्यावः पृथिवीतले ॥११॥
रथचक्रप्रमाणानि नगराणि क्वचित् क्वचित् । [५
९] क्वचिद् वादित्रघोषांश्च तथा गीतस्वनं क्वचित् ॥१२॥ [१पू
क्वचित् पुण्याहघोषांश्च क्वचिच्च रुदितस्वनान् । [N
N] आपगाः संप्रकाशन्ते तन्तुवत् संभृताः क्षितौ ॥१३॥ [८व
११पू] महानद्योऽपि दृश्यन्ते लाङ्गलस्य गतिर्यथा ।
N] निषधो हेमकूटश्च माल्यवान् शृङ्गवांस्तथा ॥१४॥ [N
मारवन्तस्तथाऽन्येऽपि प्राकारा इव ते बभुः ।
N] अथाकाशं प्रपद्यावो भीममक्षयमव्ययम् ॥१५॥ [N
N] पश्यावः सिद्धमार्गांश्च खेचरांश्च सहस्रशः । [N
१०पू] तत्रैवाप्सरसो बह्वीः पश्यावः सुविभूषिताः ॥१६॥ [६व

---

१. म—०स्वच्छनील ।
२. के रा—‡रविर्नौ तु प्रयातव्यौ ।
म—‡रविर्नौ तु प्रयातव्यौ ।
ब म छ२ श—रविमार्गं प्रयातव्यौ ।
च—‡रविर्नौ तु प्रयातव्यौ ।
३. के—वायुपथा ।
४. म—पश्यामि ।
५. म च—†गीतस्वनां ।
६. छ२—मद्दल ।
७. म—संवृताः ।
८. के रा—निषेधो । म—निषधो ।
९. म—सारवंतश्च ।
१०. छ१—†प्रभुः ।
११. म च—सिद्धमार्गं च ।
१२. छ१—समन्ततः ।
१३. के रा छ१ ब म छ२ श म च—बहवः ।

तूर्णमुत्प्लुत्य चाकाशमादित्यपथमास्थितौ ।
११] आवामालोकयन्तौ च कुर्वाणौ वेगमुत्तमम् ॥१७॥ [७
अवनिं दृष्टवन्तौ च नवशाद्वलशोभिताम् । [N
१२] उपलैरिव संच्छन्नां सुमहद्भिश्च पर्वतैः ॥१८॥ [८ पू
१३ उ] हिमवांश्चैव विन्ध्यश्च निषधश्चार्णवावृतः ।
पुष्करिण्यां यथा नागा लक्ष्यन्ते भूतले स्थिताः ॥१९॥[९
१४] तीव्रः स्वेदश्च दाहश्च भयं चासीत् तदाऽऽवयोः ॥२०॥
समाविवेश मोहश्च मूर्छा ग्लानिश्च मे परा । [१०
१५] न दिग् विज्ञायते पूर्वा कौवेरी न च वारुणी । [११पू
याम्या न विदिता चैव भानुरश्मिप्रतापिता ॥२१॥ [N
१६] युगान्ताभिहते काले दह्यमान इवाम्बरे । [११उ
अग्निराशिरिवाभाति भास्करो नीललोहितः । [N
१७] अप्रमेयवपुस्तत्र नातिव्यक्तः प्रकाशते ॥२२॥ [N
यत्नेन महता व्योम्नि मया समभिवीक्षितः । [१२
१८] तुल्यः पृथ्व्योः प्रमाणेन भाति मे भास्करस्तदा ॥२३॥ [१३
जटायुर् मामनापृच्छ्य पपातावाङ्मुखस्तदा ।
१९] तं दृष्ट्वा तूर्णमाकाशादात्मानं सम्प्रयुक्तवान् ॥२४॥ [१४
पक्षाभ्यां स मया गुप्तो जटायुर् न व्यदह्यत ।
२०] पराक्रमन् रश्मिदग्धः पतं वायुपथादहम् ॥२५॥ [१५

---

१. म—०मंप्लुत्य ।
२. रा—अ भ च—ह ।
३. म—+ उत्पलैरिव ।
४. रा—‡ सुमहद्भिश्च ।
५. अ म—च कौवेरी न ।
६. क, म—तु ।
७. अ भ च—युगान्ताग्नि० ।
८. कै रा ल१ च म क२ अ— + इवाम्बरं ।
९. अ म च—पृथ्वी० ।
१०. कै—+ अहं ।

अवैक्षं[1] तं निपतितं जनस्थाने जटायुषम् ।
२१] अहं च पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥२६॥ [१६
पुण्यानि नापि मे सन्ति यत्र मग्नोऽस्मि सागरे । [N
२२] आकाशे वा मृतो नैव विषमे च शिलोच्चये ॥२७॥ [N
राज्याद् विहीनो भ्राता च पक्षाभ्यां विक्रमेण च ।
२३] सर्वथा मर्तुमिच्छामि पतिष्यामि गिरेस्तटात् ॥२८॥ [१७
को हि मे जीवितेनार्थो विपक्षस्याद्य पक्षिणः । [N
२४] परैः सन्धार्यमाणस्य काष्ठलोष्टसधर्मिणः ॥२९॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे सम्पातिवाक्यं नाम
त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

१. ल₁—अवेक्षं ।
म म च—अवेक्षं ।
म—तवेक्षं ।
२. कै रा ल₁ ब म ल₂ या—
जटाकृते । म च—जडीकृत (:)
३. म—+ नापि । म—+ नापि ।
४. रा—+ गन्तुमि० ।
५. म—निपतिष्यामि ।
६. रा ल₂—विपक्षस्याथ ।
७. ल₂—इति ।
रा—श्रीरामायणे ।
८. ल₁ ब म दा—किष्किन्धा० ।
म च—नास्ति ।

एवमुक्तो मुनिश्रेष्ठं मारुदं दुःखितो भृशम् । [१पू
१] विसृजन्नेत्रजं वारि गिरि-प्रस्रवणं यथा ॥१॥ [N
मां स बाष्पमुखं दृष्ट्वा महर्षिः करुणान्वितः । [N
२] ध्यात्वा मुहूर्तं भगवानिदं वचनमब्रवीत् ॥२॥ [१उ
भविष्यतस्तु पक्षौ ते विशेषिततरौ द्विज ।
३] चक्षुषी प्राणशक्तिश्च विक्रमश्च बलं च ते ॥३॥ [२
पुराणे सुमहत् कार्यं त्वत्कृते हि मया श्रुतम् ।
४] दृष्टं मे तपसा चैव श्रोत्रेण च श्रुतं द्विज ॥४॥ [३
राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः ।
५] तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥५॥ [४
अरण्यं भार्यया सार्धं भ्रात्रा चैव स गमिष्यति ।
६] कस्मिंश्चिदेव धर्मज्ञः पितुर्निर्देशमाचरन् ॥६॥ [५
रावणो नाम रामस्य भार्यामपहरिष्यति ।
७] राक्षसेन्द्रो जनस्थानाद् दुर्जयः सुरदानवैः ॥७॥ [६
सा तु कामैः प्रलोभिता भक्ष्यैस्तैस्तैश्च मैथिली ।

---

१. म—एवं मुनिश्रेष्ठमहं ।
२. कै रा ङ$_1$—‡ विसृजं ।
ब ङ$_2$ शा—व्यसृजं ।
म—† चसृजं ।
३. ब म ङ$_2$ शा अ—गिरिः प्रस्र० ।
ब च—† गिरिं प्रस्र० ।
४. कै रा ङ$_1$ ब म ङ$_2$ शा—‡ चक्षुषा ।
५. कै रा ङ$_1$ अ ब म ङ$_2$ शा च—† ० [illegible] ।
६. म—नास्ति ।
७. रा—‡ च संगमि० ।
शा म—सह गमि० ।
८. कै—नास्ति ।
९. ङ$_1$ ब—निदेशं पितुराचरन् ।
१०. कै रा—०नाद् दुर्जयैः ।
अ म—० नादवध्यः ।
ङ$_2$ शा—‡ दुर्जयः ।
११. शा—सुरासुरैः ।
१२. अ म च—‡ प्रलोभिता ।

८] धार्ष्यमाना पिशाचीभि र्दुःखसक्ता न मोक्ष्यते ॥८॥ [७
परमार्थं तु वैदेही ज्ञात्वा दास्यति देवराट्[3] ।
९] तदन्नममृतमस्त्यं सुराणामपि दुर्लभम् ॥ ९ ॥ [८
१०उ] अन्नमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥१०॥ [९ उ
यदि जीवति मे[5] भर्ता देवरो वापि लक्ष्मणः ।
११] तिष्ठतः प्रेत्यभावे वा स्यादिदं त्वक्षयं तयोः॥११[6]॥ [१०
एष्यन्त्यन्वेषकास्तस्या महादूताः प्लवङ्गमाः ।
१२] आख्येया राममहिषी तेभ्यस्ते जनकात्मजा ॥१२॥ [११
सर्वथा चेह तिष्ठ त्वमीदृशः क गमिष्यसि ।
१३] एतं कालं प्रतीक्षस्व लप्स्यसे त्वं तनूरुहौ ॥१३॥ [१२
उत्सहे स्वांहमद्यैव प्रीत्या कर्तुं सपक्षकम् ।
१४] इहस्थस्त्वं तु लोकानां महत् कार्यं करिष्यसि ॥१४॥ [१३
तथापि खलु यत् कार्यं तयोर्वा नृपपुत्रयोः ।
१५] ब्राह्मणानां सुराणां च मुनीनां वासवस्य च ॥१५॥ [१४
इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।
१६] चिरं[11] तु जीवितव्यं स्यादिति त्यक्ष्ये कलेवरम्॥१६ [१५पू

१. च—+ मोक्ष्यति ।
२. कै रा—+ दानवः ।
अ म च—वासवः ।
३. अ—अतः परमधिकः पाठः—
तदन्नममृतमस्त्यं विज्ञायेन्द्रप्रयोदनं ।
४. अ— ‡ अमें सु० ; च—अमे उ० ।
५. रा अ म च—भर्ता मे ।
६. कै रा ळ, च म ळ२ दा—
तक्ष तुलये ।
७. अ—अतः परमधिकः पाठः—
तदन्नमशित्वा तु वर्षाणां सीता त्वं वर्तयिष्यसि ।
तेन कालं सती नित्यं क्षुत्तृष्णापरिवर्जिता ॥
८. अ म च—रामदूताः ।
९. कै रा ळ, च म ळ२ दा म—
तनूरुहान् ।
१०. कै रा ळ, च म ळ२ दा—
वाहमद्यैव ।
११. कै रा ळ, च म ळ२ दा—
०र्थं स्यादित्यक्षयं ।
अ—
न तु जीवितुमिच्छामि चिरं त्यक्ष्ये ।

२४पू ] मत्स्यैस्तु विविधैर्वन्यैर्मा पोषयति पुत्रकः ॥२५॥ [N
इदमन्यद्भुतं सर्वे पश्यन्तु हरयो मम ।
N] इमौ पक्षौ मद्गात्रौ मे बलं चैव यथा पुरा ॥२६॥ [N
पुनर्युवानमात्मानं पश्याम्यौदार्यवत्तरम् ।
N] मनसा चैव जानामि मनश्चाख्याति हीव मे ॥२७॥ [N
एष पश्यामि वैदेहीमशोकवनिकागताम् ।
N] स्वस्ति वोऽस्तु गमिष्यामि कृतार्थाःसन्तु वानराः॥२८ [N
ततस्ते वानरा हृष्टास्तदद्भुतमवेक्ष्य वै ।
N] यौवनाद् गृध्रराजस्य कृतं कार्यमित्यब्रुवन् ॥२९॥ [N
ततस्ते वचनं श्रुत्वा सर्वे संहृष्टमानसाः ।
१२,२४] बभूवुर् हरिशार्दूला विशोका उदयोन्मुखाः ॥३०॥ [१४
अथ पवनसमानविक्रमास्ते
प्लवगवराः परिपूर्णमानसाः ।
त्वरितमभिमुखा ययुं दिशं [ ? ]
२५] जनकसुतापरिमार्गणोत्सुकाः ॥३१॥ [१५

इत्यार्षे रामायणे किष्किन्धाकाण्डे संपातिपक्षोद्गमनो नाम
चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

१. कै रा अ म $ख_2$ श च—
†०वैर्मी० ।
$ख_1$ ब—‡०वैरपि० ।
२. $ख_2$—इदमन्यदद्भुतं ।
३. कै $ख_1$ अ म $ख_2$श भ च—
०पक्षिति यु० ।
४. अ—०कामयुवयो० ।
भ च—०कामुयुवयो० ।
५. अ च—० मेवात्मनाथ ।
६. अ भ च—दिशं ययुः ।
७. अ च—० ौत्सुकास्ता ।
८. रा—श्रीरामायणे ।
अ—इति श्री ।
९. $ख_1$ब म $ख_2$श—किष्किन्दा० ।
भ—नास्ति ।
१०. $ख_1$—संपातिपक्षो नाम ।
म—० पक्षोद्गमे ।
अ श च—० पक्षोद्गमो ।

एव कथयतस्तस्य पतगस्य महात्मनः ।
१] उत्पेततुस्ततः पक्षौ वानराणां प्रपश्यताम् ॥१॥ [८
स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः ।
२] प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ॥२॥ [९
निशाकरऋषेस्तस्य प्रभावात् सुमहात्मनः ।
८] समुत्थिताविमौ पक्षौ सर्वे पश्यत वानराः ॥३॥ [१०
इत्युक्त्वा तान् हरीन् सर्वान् संपातिः पतगेश्वरः ।
९] उत्पपात गिरेः शृङ्गाज् जिज्ञासुरगमद्गतिम् ॥४॥ [११
ततस्ते वानराः सर्वे विस्मयोत्फुल्ललोचनाः ।
१०] पर्वताग्रमुदैक्षन्त संपातिं यत्र संस्थितः ॥५॥ [N
विस्मितस्तस्तु संपातिः पुनस्तानब्रवीद्वचः ।
११] हर्षसंपन्नया वाचा स्वरसंपत्प्रयुक्तया ॥६॥ [N
निशाकरस्यर्षेः सर्वे यूयं पश्यत वानराः ।
१२] सम्यक्चीर्णस्य तपसः प्रभावमिह पावनम् ॥७॥ [N
आदित्यरश्मिभिर्दग्धौ पक्षौ तु गमनाक्षमौ । [N
१३] संजातौ तस्य सत्येन खगेने क्षणमक्षमौ ॥८॥

---

१. म—०[illegible]० ।

२. के रा ज म ङ$_1$ ग म च—०[illegible]० ।

३. ग—उत्पपात गिरेः [illegible] ।

४. के रा ङ$_1$ म व ङ$_2$ ग म च—‡ स्थिताः ।

५. म—०[illegible] ।

६. ङ$_1$ च—निशाकरस्य ।

७. रा—०[illegible] ।

८. म—गमनाक्षमौ ।

९. [illegible]: “[illegible]” पाठः स्यात् ।

१०. ङ$_2$—[illegible] ।

यौवने वर्तमानस्य यथासीन् मे[1] पराक्रमः ।
१४] तदेवाद्यावगच्छामि बलं पौराणमात्मनः ॥९॥ [११
सर्वथा क्रियतां यत्नः सीतां द्रक्ष्यथ वानराः ।
१५] पक्षलाभो मम यथा भेत्यक्षं संनिदर्शनम् ॥१०॥ [१२
क्रोशमात्रमितो मत्वा विन्ध्यादस्मान्नगोत्तमात् ।
१६] शतयोजनविस्तीर्णं लङ्घयध्वं महोदधिम् ॥११॥ [N
तत्र त्रिकूटशिखरे निविष्टं रावणालयम् ।
१७] लङ्कां द्रक्ष्यथ दुर्धर्षां निहिता यत्र मैथिली ॥१२॥ [N
रक्ष्यमाणा[3] सुभीर्मामी[4] राक्षसीभिर्यशस्विनी[5] ।
१८] तर्ज्यमाना[6] च बहुशस्तस्य रौद्रस्य शासनात् ॥[7]१३॥ [N
कृतार्थाश्च भतीताश्च तां च दृष्ट्वा यशस्विनीम् ।[8]
१९] पर्यषित्वा ततो लङ्कां पुनरेष्यथ वानराः ॥१४॥ [N
न त्वस्त्यस्ति बलं किंचिन् मम ज्ञातुमनागतम् ।
२०] अनुभावात् तु जानामि महर्षेर्भावितात्मनः ॥१५॥ [N
हिमवन्तं गमिष्यामि वङ्कुरस्त्वथरं[10] गिरिम् ।
२१] तत्र मे दयिता भार्या ज्ञातयश्च कृतालयाः ॥१६॥ [N
विशालशिखरैः प्रांशुं(? र् )[11]मलयादविदूरतः ।
२२] वानरा गम्यतामेष समुद्रस्योत्तरे गिरिः ॥१७॥ [N

---

१. म—यथासीत्र॰ ।
२. म च—॰क्षणविदर्श॰ ।
३. रा अ ल$_2$ श म च—रक्ष्यमाणा ।
४. अ च—सुभोरामी ।
५. रा अ ल$_2$ श म च—॰स्विनी ।
६. रा अ श म च—॰माना ।
७. ल$_2$—॰मानां ।
८. ल$_1$ ब म ल$_2$ श—गुर्व ।
९. अ भ च—वनचर कृतालयः ।
१०. कै रा ल$_1$ अ ब ल$_2$ श च—॰शिखरं ।
११. अ म च—प्रांशुं ।
कै रा ब म श—प्रांशुं ।

यः शक्तो योजनशतं निरालम्बे विहायसि ।
२१] क्रमितुं सागरं शूरः स सर्वैर्विनियुज्यताम् ॥१८॥ [N
इति तस्मिन् ब्रुवत्येव विहङ्गमवरे वचः ।
१२,१] उवाच जाम्बवान् वाक्यं तत्कालसदृशं हरिः ॥[1]१९॥[N
सर्वं साधु च युक्तं च भवानर्थं च भाषते ॥
२] वृद्धभावानुरूपं च हितं रघुकुलस्य च ॥[2]२०॥ [N
अस्माकं महती चिन्ता कथं सागरलङ्घनम् ।
३] भवेदिति महासत्त्व तेन स्मो व्याकुलीकृताः ॥२१॥ [N
तत्र वै[3] मतिसाहाय्यं भवान् नो दातुमर्हति ।
४] परे पारे समुद्रस्य प्लवने पततांवर ॥२२॥ [N
५ उ] श्रुत्वैतज्जाम्बवद्वाक्यं सम्पातिः प्राब्रवीद् वचः ।
तदैव स दुरात्मा वै रावणः स्याद्धतो मया ।
७] यदि पक्षौ न दग्धौ मे भवेतां सूर्यतेजसा ॥२३॥ [N
८पू] समयासीय क्रुद्धस्य सम्पातं राक्षसाधमः ।
N] लङ्कां च त्वरितोऽभ्यागाद् ससीतः सहजीवितः ॥[8]२४॥[N
८ उ] न जीवेदिति मे बुद्धिस्तेऽस्त्वमेतद् ब्रवीमि वः ॥२५॥ [N
सोऽहं वृद्धः कपिश्रेष्ठास्तेनाशक्तः पराक्रमे ।
९] लङ्कां नेतुं न शक्या(?क्या)मि स्वयं [10]वेः प्लवगोत्तमाः ॥२६॥[N
असौ ममात्मजो दक्षः सुपार्श्वो नाम वानराः ।
१०] स हि गन्तुं समर्थस्तां लङ्कां रावणपालिताम् ॥२७॥ [N

१. कै च—शूरः ।
२. कै—॰र्विनियोज्यताम् ।
३. च—नास्ति ।
४. ल₂—तत्रैव ।
५. कै ल₁ च—॰दातुमर्हसि ।
६. कै भ ब श च—सुदुरात्मा ।
७. रा—ममाप्यथ ।
८. भ—नास्ति ।
९. ल₂—॰त्यथवस्तद्ब्रवीमि ।
१०. रा ल₁ ब भ ल₂ शा—वरिष्ठाः ।
११. ल₁ ब भ ल₂ शा—वा ।

इत्युक्त्वा पतगेन्द्रोऽसौ स्वपुत्रं मनसास्मरत् ।
११] अथ प्रादुरभूत् तत्र दारुणः सुमहाद्भुतः ॥२८॥ [N
पक्षावाक्षिप्य विक्षिप्य तस्य पुत्रः प्रवेगितः ।
१२] सपुष्पाङ्कुरशाखाग्राः पतन्तीव महीरुहाः ॥२९॥ [N
तत्र प्रमाणाभ्यधिको गृध्रः पक्षी महाबलः ।
१३] महानचलसङ्काशो वानरानभ्यवर्तत ॥३०॥ [N
ततः सम्पातिपुत्रस्तु सुपार्श्वः समुपागतः ।
१४] उवाच पितरं पुत्रः किमर्थं संस्मृतोऽस्म्यहम ॥३१॥ [N
अर्थं पुत्रस्य सम्पातिः कथयामास विस्तरम ।
१५] कथयित्वा तु तत्सर्वं सुपार्श्वं समचोदयत् ॥३२॥ [N
सं तेमर्थं पितुः श्रुत्वा सुपार्श्वश्चेदमब्रवीत् ।
१६] त्यज्यतां मानसी चिन्ता तरिष्यामि महार्णवम॥३३॥[N
बलं प्रमाणं तेजश्च परैरनुपमं मम ।
१७] तेजो वेगः प्रभावश्च मय्येव ध्रुवमव्ययम् ॥३४॥ [N
शिखरात् तु महेन्द्रस्य पर्वतस्य प्लवङ्गमाः ।
१८] वर्तते योजनशते लङ्का सा यत्र रावणः ॥३५॥ [N
शीघ्रमारुह्यतां पृष्ठमिदानीं प्रापयाम्यहम ।
१९] वेगेन च गमिष्यामि परं पारं महोदधेः ॥३६॥ [N

---

१. के रा ल, ब म ल$_2$ श च— ०सा स्मरत् ।
२. श— †प्रधावत: ।
३. के— सुपुष्पा ।
४. के रा ल, अ ब म ल$_2$ श च— गृध्रपक्षी ।
५. च— सुपार्श्वः ।
६. अ म च— †०स्मृतं माहं ।
७. अ म च— अथ ।
८. अ म च— च ।
९. ल$_2$— ‡ समचोदयत् ।
१०. अ म च— तमर्थं स ।
११. अ म च— ०चेद० ।
१२. रा— वेगाः प्रभा० ।
ल$_2$— वेगप्रभा० ।

अथोवाच महातेजा ऋक्षराजमिदं वचः ।
२०] अङ्गदः प्रश्रययुतं पौरुषोद्योगसंयुतम् ॥३७॥ [N
सत्यं चानुरूपं च बलं वै भाषते भवान् ।
२१] कृतमेतावताऽस्माकं यत् महर्षिरुपागता ॥३८॥ [N
वीर्यविक्रमसम्पन्नाः सर्वे सन्ति च वानराः ।
२२] उत्प्लुत्य हि महेन्द्रं वै गिरिं गच्छेयुरर्णवम् ।॥३९॥ N
विश्राम्य त्वं महातेजाः सह पित्रा महाबलः ।
२३] कृताभिगमने बुद्धिर्मया रावणसद्मनि ॥४०॥ [N
ते तद्वचनमाज्ञाय प्रीतिसंहृष्टमानसाः ।
N] बभूवुर् हरिशार्दूला विष्णुरुद्रपराक्रमाः ॥४१॥ [N
एवमुक्त्वा तु सम्पातिस्तान् सर्वान् हरियूथपान् ।
२३,२४] जगामाकाशमाविश्य सुपर्ण इव वेगितः ॥४२॥ [N
प्रक्षीणं तं खगं दृष्ट्वा प्रहृष्टो वानरर्षभः ।
२५] इदं हृष्टतरो वाक्यं वालिपुत्रोऽङ्गदोऽब्रवीत् ॥४३॥ N
दत्त्वा प्रवृत्तिं सीताया जीवयित्वा च वानरान् ।
२६] यातः स्वनिलयं पक्षी सम्पातिर् हृष्टमानसः ॥४४॥[N
तदागच्छत गच्छामो दक्षिणस्योदधेर्गिरिम् ।
२७] समर्थयामहे तत्र लङ्घनार्थं महोदधेः ॥४५॥ [N

---

१. कै रा च म—मधुरं वाक्यमब्रवीत् ।
म च—मधुरं वाक्यमुत्तमं ।
२. म च—‡ अत्र सन्ति ।
३. म—[illegible] ।
४. म—विक्रम ।
५. कै रा ल$_1$, च म ल$_2$ श—नास्ति ।
६. रा—† सुपर्णमिव ।
७. कै रा ल$_1$, च म ल$_2$ श—वेगवान् ।
८. कै रा ल$_1$, च म ल$_2$ श—नास्ति ।
९. कै रा ल$_1$, च म ल$_2$ श—नास्ति ।

ततस्तथेत्येव तपूलुरङ्गदं
महर्षयुक्ता हरयो महाबलाः ।
स चाहृतो ज्ञातिबलेन सत्त्ववान्
२८] जगाम [2]तं गृध्रनिवेदितं[3] गिरिम् ॥४६॥ | ४

इत्यार्षे रामायणे किष्किन्धाकाण्डे संपातिवेगमनं नाम
पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

१. कै रा अ—समनुतो ।
२. म शा—गृध्रेण निवेदितं ।
३. रा—श्रीरामायणे ।
४. क, च म शा—किष्किन्धा० ।
म च—नास्ति ।
५. कै रा अ म च—
०तिपवाक्याओ नाम ।

आख्याते गृध्रराजेन समुत्प्लुत्य प्लवङ्गमाः ।
१] सङ्गताः प्रीतिमन्तश्च विनेदुः सिंहसङ्क्वद् ॥ १ ॥ [१
सम्पातेर्वचनाच्चे तु सर्वे वानरपुङ्गवाः ।
N] हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥२॥ [२
रात्रिभिर्दिवसैश्चैव हरयस्ते समुत्सुकाः ।
N] उषित्वैकादशीं रात्रिं ददृशुर् महदर्णवम् ॥ ३॥ [N
सत्त्वैर्महद्भिः क्रीडद्भिर् बहुभिर् बहुधा जले ।
४] व्यादितास्यैर् महावीर्यैरुत्पतद्भिः समावृतम् ॥४॥ [५
प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः ।
५] क्वचित् पर्वतमात्रांश्च जलराशीन् समुत्क्षिपन् ॥५॥ [६
संकुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
६] रोमहर्षकरं दृष्ट्वा विनेदुः कपिकुञ्जराः ॥६॥ [७
आकाशमिव दुष्पारं सागरं प्रेक्ष्य ते ततः ।
८] विषेदुर् वानराः सर्वे कथं कार्यमिति ब्रुवन् ॥७॥ [८

१. म—समुत्पत्य ।
२. कै म—† ०संगवत् ।
३. कै रा व म भ—वचनाच्चे ।
४. ल$_{२}$—०रमापेतुः ।
५. कै रा म ल$_{२}$ शा—‡ ०त्वैकादशीं ।
६. कै रा व—प्रतिबिंबमिवांबरं ।
अ भ च—आमेघुर्वरुणालयं ।
७. अतः परमधिकः पाठः—
अ भ च—
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशं ।
संनिवेशं ततश्चक्रुर्हरिवीरा हरीश्वराः ॥
भ च—
ते समुद्रं समासाद्य प्रतिबिंबमिवांबरम् ।
भ—
ते समुद्रं समासाद्य दद्रुर्भीमविक्रमाः ।
कृत्स्नं लोकस्य महतः प्रतिबिंबमिवांबरं ॥
८. कै म ल$_{२}$—† व्यादितास्यैर् ।
९. शा—०वैर्ऊर्मिभिश्च ।
१०. रा—समं वृतं ।
११. ल, म—दुष्पारं ।
१२. ल, व म शा—वनौकसः ।
१३. कै—निपेतुर् ।
१४. ल$_{२}$ शा—०पीतिमब्रुवन् ।

विषण्णां वाहिनीं दृष्ट्वा समुद्रस्य निरीक्षणात् ।
९] आश्वासयामास हरीनङ्गदो वानरर्षभः ॥८॥ [१
N] हरिवृद्धैः समागम्य मन्त्रकालममन्यत ॥९॥ [११ उ
स वानरैः परिवृतो युवराजो बभौ तदा । [N
N] मरुद्गणैः परिवृतो वृत्रशत्रुरिवाम्बरे ॥१०॥ [N
सा वानराणां तु चमूः परिवार्याङ्गदं बभौ ।
११] वासवं परिवार्येव वाहिनी मरुतां यथा ॥११॥ [१४
१५ पू] तान् विषादेन महता सहसा समभिप्लुतान् । [२० पू
N] ततस्तान् हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
१५ उ] अनुमान्याङ्गदः श्रीमान् वाक्यमर्थवदब्रवीत् ॥१२॥ [१६
न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
१८] खादयत्यपि तेजोऽङ्गं तु बालं क्रुद्ध इवोरगः ॥१३॥ [११
यो विषादं प्रसंहते विक्रमे प्रत्युपस्थिते ।
१७] तेजसा तस्य हीनस्य पुरुषार्थो न सिद्ध्यति ॥१४॥ [१२
२८ पू] क इदानीं महातेजा लङ्घयिष्यति सागरम् । [१७ पू
कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत् ॥१५॥

---

१. कै—+निषण्णां ।
२. ग्रा—+वाहिनीं ।
३. छ$_2$—नास्ति ।
४. ग्रा—+०वृद्धं ।
५. छ$_1$ म ग्रा—समवाय० ।
६. छ$_2$—नास्ति ।
कै ग्रा म च—१२, ,१० ११, इत्येवंक्रमः पाठः ।
७. छ$_2$—नास्ति । म—सेना एकाक्षम-
इत्यवलोक्ये न दृः ।
८. कै—०वं परिहार्येव ।
रा—वासवार्ये च ।
९. कै रा अ म च—अत्र स्थानेऽयं पाठः:—
अब्रवीदङ्गदः श्रीमान् वानरान् वानरर्षभः ।
१०. रा म—सादयत्यङ्गमं ।
म च—सादयत्यङ्गमं ।
११. च$_1$ म छ$_2$ ग्रा—विसर्जते ।

१४] अङ्गदाद् द्विविदान् मैन्दादन्यश्च च हनूमतः । [१५
१० उ] भयं त्यजत मा भैष्ट कृतकृत्या वयं इदम् ॥१६॥ [N
निशां तावदिमां सर्वे स्वपध्वं विगतज्वराः ।
११] श्वः प्रभाते गमिष्यामि यत्र वः श्रेयो भविष्यति ॥१७॥ [N
अथ रात्र्यां व्यतीतायामङ्गदो हरिसत्तमः । [१३पू
१२] सह तैर् वानरैः सर्वैर् विषसाद गिरेस्तटे । [N
१०पू ] कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥१८॥ [१७ उ
अङ्गदस्य वचः श्रुत्वा न कश्चित् किञ्चिदब्रवीत् ।
२६] स्तिमितेवाभवत् भक्ता तत्र सा हरिवाहिनी ॥१९॥ [२२
२७ उ] पुनरेवाब्रवीत् भक्तांस्तान् हरीन् हरिसत्तमः । [२३पू
१६पू ] सुपध्वं यस्य या शक्तिर्गमने वः प्लवङ्गमाः ॥२०॥ [२४ उ
क इमां वाहिनीं सर्वां समवेतां वनौकसाम् ।
२९] मोक्षयिष्यति सन्देहात् सुग्रीवस्य महात्मनः ॥२१॥ [१८
कस्य प्रसादाद् दारांश्च धनानि च गृहाणि च ।
२१] इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयम् ॥२२॥ [१९
कस्य प्रसादाद् रामं च लक्ष्मणं च महाबलम् ।
२४] अभिगच्छेम संहृष्टाः सुग्रीवं च महौजसम् ॥२३॥ [२०
१० उ] कः करिष्यति रामस्य प्रियमात्महिते रतः ।

---

१. कै रा क१, ब भ क२—द्विविदा० ।
२. भ—च ।
३. ब भ—विषसाद ।
४. कै रा—पुनरेवाभवत् ।
भ भ प—पुनरेवाङ्गदः प्राह ।
५. भ—तस्य ।
६. भ—+कथमस्य ।
७. रा भ भ प—महात्मने ।
८. क१—महौजसः । भ क२ रा—महाबलं ।

N] करिष्यंति च कल्याणं कस्तरिष्यति सागरम् ॥२४॥ [N
गन्तव्यो नगरी लङ्का मार्गितुं जनकात्मजाम्।
N] लङ्घनीयश्च वेगेन सागरः शतयोजनः ॥२५॥ [N
सर्वे हि प्लवगश्रेष्ठा भवन्तो दृढविक्रमाः।
११] व्यपदेशेषु विख्याताः प्रजाभिश्चापि सत्कृताः ॥२६॥ [N
१२पू] न हि वो गमने सङ्गः कदाचित् कस्यचित् क्वचित्। [२४पू
१४पू] दृष्टपूर्वो हि यो लोके श्रुतपूर्वोऽपि वा भवेत् ॥२७॥ [N
यदि कश्चित् समर्थो हि सागरस्यास्ति लङ्घने।
२५] स ब्रवीतु ददात्वद्य पुण्यामभयदक्षिणाम् ॥२८॥ [२१
१४ उ] को वैः कियदेव विक्रमेते हरिश्रेष्ठो महाबलः।
२२ उ] हृष्टः स क्षिप्रमाख्यातु यस्य या परमा गतिः ॥२९॥ [N
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः।
२०] विक्रम्य सहसा हस्तादमृतं सं हरोनयेत् ॥३०॥ [N
०१पू] चन्द्रादपि हरेल्लक्ष्मीं तेजो वा रविमण्डलात्।
२२पू] विक्रमी य इतो लङ्कां गत्वा तु पुनरात्रजेत् ॥३१॥ [N
१६ उ] अथाङ्गदवचः श्रुत्वा ते वै शाखामृगर्षभाः।

१. अ ल₁ भ च—कः करिष्यति।
२. कै—१कर्तव्या।
३. भ—१कर्तव्यश्च।
४. श—योगेन।
५. रा—भवन्ति।
६. कै ल₁ ब म ल₂ श —१ख्याताः
अ च—चाख्याताः।
भ—च ख्याताः।
७. भ—प्रजाभि०।
८. अ—संगः।
९. कै ल₁ ल₂ श भ च—वो।
१०. रा कृतपूर्वो हि। अ—वो।
११. म ल₂ श—०स्ति च—हवः।
१२. कै—०रस्येव, रा—०रस्य ह।
म ल₂—०रस्यास्य।
१३. रा वा।
१४. कै रा अ भ च—विक्रमं।
१५. च—विक्रमं।
१६. च—०मायातु।
१७. रा—न स हानयेत्।
१८. कै रा—विक्रमो। अ—विक्रम्य।
ल₁—विक्रमे।

N] स्वां स्वां गतिं[1] समुत्साहमूचुस्ते तु समाहिताः ॥३२॥ [६५,१
गजो गवाक्षः शरभ[2] ऋषभो गन्धमादनः ।
१८] मैन्दश्च च द्विविदश्चैव[3] सुषेणो जाम्बवान् नलः ॥३३॥ [२
अभाषत गजस्तत्र पुप्लुवे दशयोजनम् ।
४१] गवाक्षो योजनान्याह प्लवेयं द्विगुणान्यहम् ॥३४॥ [३
शरभो वानरस्तत्र वानरांस्तानुवाच ह ।
४२] अहं त्रिंशद् गमिष्यामि योजनानां प्लवङ्गमाः ॥[4]३५॥ [४
अथाभ्रशिखराकार ऋषभोऽप्रतिमो गतौ ।[5] [N
४३] ऋषभो वानरश्रेष्ठो वानरांस्तानुवाच ह ।
चत्वारिंशद् गमिष्यामि योजनानां न संशयः ॥३६॥[6] [५
४४] वानरस्तु महातेजास्[7] त्वब्रवीद् गन्धमादनः ।
योजनानां गमिष्यामि पञ्चाशदिति मे मतिः ॥३७॥ [६
४५] मैन्दो हि वानरस्तत्र वानरांस्तानुवाच ह ।
योजनानां तु वै षष्टिमहं प्लवितुमुत्सहे ॥३८॥ [७
४६] ततस्तत्र महातेजा[8] द्विविदः[9] प्रत्युवाच ह ।
४७पू] गमिष्यामि न सन्देहः सप्ततिं योजनान्यहम् ॥३९॥ [८
N] सुषेणश्च हरिश्रेष्ठः सत्त्ववान् बलवानपि ।
N] अशीतिं प्रतिजानीते योजनानां पराक्रमम् ॥[10]४०॥ [९
४८पू] स मारुतसमो वेगे[11] पार्तराष्ट्रसमो जवे । [N

---

१. रा—गतिं समु० ।
ब—गतिसमुत्साहमूचुस्तं ।
२. कै रा ङ$_1$ ब म अ ङ$_2$ हा च—शरभ । अ—‡ शरभो ।
३. कै रा ङ$_1$ ब म ङ$_2$—द्विविद० ।
४. म—नास्ति ।
५. कै अ—‡ ऋषभोऽप्रतिमो ।
६. ङ$_2$—नास्ति ।
७. म ङ$_2$—नास्ति ।
८. म—०तेजा बल० ।
९. कै रा ङ$_1$ ब म ङ$_2$—द्विविदः ।
१०. ङ$_1$—नास्ति ।
११. कै रा अ म च—वीर्ये ।

N] जाम्बवांस्तु महाप्राज्ञो वृद्धः परमसंमतः ॥४१॥
वानराणां वचः श्रुत्वा सागरप्लवनं प्रति । [१०
N] तान् सर्वान् वानरश्रेष्ठानिदं वचनमब्रवीत् ॥४२॥ [N
पूर्वमस्माकमप्यासीत् कश्चिद् गतिपराक्रमः ।
N] ते वयं वृद्धभावं हि अनुप्राप्ताः स्म (ः) सांप्रतम् ॥४३॥ [११
जराशिथिलतां प्राप्ता मन्ददृष्टिपराक्रमाः ।
N] स्मराम्यजातं गरुडममृतस्य च मन्थनम् ॥४४॥ [N
देवासुरविमर्दाश्च दृष्टा मे बहवः पुरा । [N
N] किंतु नैवंगतं शक्यमिदं कार्यमुपेक्षितुम् ॥४५॥
यदयं कपिराजश्च रामश्च कृतनिश्चयः । [१२
N] सांप्रतं बलमस्माकं योग्यं गतिपराक्रमम् ॥४६॥ [१३पू
तं पुरस्कृत्य वक्ष्यामि नैवं किंचिन्मृषा वदे ।
N] अहमस्य समुद्रस्य यास्यामि प्लवनं गतः ॥४७॥ [N
५६ उ] दशोनं योजनशतं नेवत्येव न संशयः । [१३
५१ उ] तांश्च सर्वान् हरिवरो जाम्बवाननुमान्य वै ॥४८॥ [१४पूव
५२पू] उवाच हरिमुख्यानां संनिधौ वचनं महत् । [N
५३पू] स खल्वेतावदेवासीद् गमने मे पराक्रमः ॥४९॥ [१४ उ

---

१. रा ळ१ अ ब म ळ२ श—।०भाषा।
२. श—प्राज्ञो।
३. श—०ष्टिपराक्रमः।
४. ळ२ म—स्मरामि जातं।
५. म—नैवंगते
६. अ म च—कृतनिश्चयौ।
७. श—योगि।
८. रा म च—गति।
९. म—प्लवने।
१०. के रा म च—वृत्तः।
अ—वृत्तः।
११. रा ळ१ म ळ२ श—¦नवत्येवं।
ब—नवतिं च।
१२. अ म च—हरिवरान्।
१३. रा—वचनं संनिधौ।
१४. के रा ब म च—पितुः।
१५. रा—० वदेवास्ते।

५२ उ] तारुण्ये हि बलं वीर्यं यथासीद् विक्रमो मम ।
५३ उ] यत् कृतं यौवनस्थेन मया तच्छ्रोतुमर्हथ ॥५०॥ [N
सर्वस्य वृद्धस्य बलं पौराणं यौवने गते ।
N] आचक्षाणस्य बहुधा हास्यं भवति वानराः ॥५१॥ [N
किंतु वक्ष्याम्यहं वीर्यमात्मनो यौवनोदये । [N
सुपर्णेन मया चैव बलियज्ञे सनातनः ॥५२॥
५४] विक्रमांस्त्रीन् क्रमन् विष्णुस्त्रिः प्रदक्षिणमावृतः । [१९
त्रिविक्रमेण यां क्रान्तां सशैलवनकानना ॥५३॥ [N
२,२१] त्रिसप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् । [१६,२१
N] गत्वा प्राप्य च कैलासं गच्छामि विबुधालयम् ॥५४॥[N
५५पू] बालभावे तदासीन्मे बलमप्रतिमं परैः । [१९ उ
N] पशूंस्तांश्च जिघांसुं वै वचनमब्रवीत् तदा ॥ ५५॥ [N
दैत्यः पर्वतहस्तस्तु न भविष्यथ मद्भुजौ ।
N] इत्युक्त्वा पर्वतं दोर्भ्यां चिक्षेपासुरनन्दनः ॥५६॥ [N

---

१. रा श—यथा० ।
२. अ—यथा ।
३. म श—बलम।चक्षाणमातृणः ।
४. म रा—त्रुटितः पाठः ।
५. कै रा ल, ब म ल, श—यौवनाद्यं ।
६. अ म च—सुषेणेन ।
७. अ—मयात । म—या तात । च—मया मातः ।
८. अ ब म च—त्रिः सप्तकृत्वः । म—त्रिसप्तकृत्वा ।
९. अ—अतः परमधिकः पाठः—
यदा चोषधयो हाभिः संचिता देवशासनात्
निष्पन्नममृतं ताभ्यस्तदासीन्मा (न्मे ?)
महद्बलः ( लम् ? )
उदधा……चाहमस्तं गिरिवरोत्तमं ।
तं तु प्राप्य तु गच्छामि कैलासं विबुधालयं ।
१०. कै रा ल, ब म ल, श—तदा स्वाम्ये ।
११. अ च—
पशूंस्तानजिघांसु च वैकेन्द्रामब्रवीत्तदा ।
म—
पशूंस्तान्मा जिघांसुश्च बलीन्द्रामब्रवीत्तदा
१२. अ—भविष्यति मद्भुजा ।

तद्धोघातेन खेदात् तु पर्वतो जानुना धृतः ।
N] तेन भग्नश्च मे जानुः स्रस्तः शिथिलविक्रमः ॥५७॥ [N
५५ उ] स इदानीमहं वृद्धः प्लवने मन्दविक्रमः । [१६पू
५६पू] सांप्रतं प्लवने शक्तिं नवतिं प्रवितर्कये ॥५८॥ [N
५७पू] नैतावता च संसिद्धिं गन्तुं कार्यमिदं भवेत् । [१७
N] स कदाचिद् गतोऽहं तु यज्ञे तेषां महात्मनाम् ॥५९॥ [N
ऋषीणामग्निवपुषां कैलासस्य समीपतः ।
N] ततोऽहमभिवाद्यैव मुनीन् ज्वलनतेजसः ॥६०॥ [N
N] बर्हिपुत्रं च हतवान् क्रुद्धं मृत्युमिवापरम् ।
५७उ] अथोक्तवति तस्मिंस्तु हरीणां प्रवरे वचः ॥६१॥ [N
नलश्चाप्याह तेजस्वी भ्रातॄन् परमदुःखितान् ।
N] नवतिं चैव सप्तांश्च गमिष्यामि प्लवङ्गमाः ॥६२॥ [N
तत्र पर्वतसङ्काशो हनूमानञ्जनासुतः ।
५८] न तत्र सोऽब्रवीत् किंचिद् बलं पौरुषमात्मनः ॥६३॥ [N
अथोत्तरमुदारं च प्रत्युवाचेदमङ्गदः ।
५९] अनुमान्य महाप्राज्ञं जाम्बवन्तं महाकपिम् ॥६४॥ [१८
अहमेतद् गमिष्यामि योजनानां शतं ध्रुवम् ।
६०] निवर्तने तु मे बुद्धिर् निश्चयं नाधिगच्छति ॥६५॥ [१९

---

१. कै रा च—तदा एवेम ।
अ—तद्व्याघातेन । भ—तदाघातेन ।
२. रा—धृत: ।
३. भ—[illegible] ।
४. भ—धृत: ।
५. रा—इदानीं महाप्लुत: ।
६. छ$_1$ च—तां सिद्धिं ।
भ छ$_2$—गता सिद्धिं ।
७. छ$_1$—ज्वलन० ।
ब म श—ज्वलिततेजस: ।
भ—० महौजसं ।
८. कै—बर्हि पुत्रं ।
९. च—नास्ति ।
१०. के रा छ$_1$, म छ$_2$ श अ भ च सप्ताधि ।
११. के रा छ$_1$, ब म श, अ भ च—हनूमानञ्जनीसुत: ।
१२. भ—[illegible] ।

वाल्याद्लिष्टभावाच गुरुदोषाविचारणात् ।
६१] नित्यं च लालितस्नेहात् सच्छायाश्रयीहितः पुरा ॥६७॥ [N
६२पू ] तमुवाच हरिश्रेष्ठो जाम्बवान् वाक्यकोविदः ।
N] ज्ञायते गमने बुद्धिस्तव हर्यक्षपुङ्गव ॥६७॥ [२०
कार्यं क्षतं वा भूयो वा गत्वा प्रतिनिवर्तितुम् ।
N] योजनानां भवेः शक्तो न त्वेष विधिरुत्तमः ॥६८॥ [२१
त्वं हि वालिबलाद्धीनः किंचिद् वानरपुङ्गव ।
६४] योजनानां सहस्रस्य लङ्घने शक्तिमान् विभो ॥६९॥ [N
यादृशो हरिशार्दूलो वाली प्रख्यातविक्रमः ।
६५] सुग्रीवश्च महाबाहुस्तादृशस्त्वं हरीश्वर ।[N
त्वं हि प्रेषयिताऽस्माकं निग्रहानुग्रहे प्रभुः॥ ७० ॥
६६] तवाज्ञानिरताः सर्वे वयमादाय मैथिलीम् । [N
N] आगमिष्याम एतस्मिन् क्षणे नास्त्यत्र संशयः ॥७१॥
अस्माकं यदि न त्वं स्या अग्रणीर् वानरेश्वरः । [N
६७] न कस्यचिद् वयं किंचिच् कृणुयाम परस्परम्॥७२॥[N
न हि प्रेषयिता तात प्रेष्यैः प्रेष्यैः कथं भवेत् ।
६८] भवतार्यं जनः सर्वः पालनीयः प्रयत्नतः ॥७३॥ [२२
भवान् किलात्र चास्माकं स्वामिभावे व्यवस्थितः ।

---

१. कै—० दोषविचारणात् ।
च—० दोषाविचारितः ।
म—० दोषवि० ।
२. म—पित्रा संलालितः स्नेहात् ।
३. कै म—सच्छायं प्राहितः ।
४. रा म—भवेच्छक्तो ।
म—भवेत् शक्तो ।
५. ल₁—वालिन० ।
६. ल₂—नास्ति ।
७. ल₂—सुग्रीवाज्ञारताः ।
८. कै रा भ म च—नास्ति ।
९. म—त्वमस्यमग्र० ।
१०. म—वानरेश्वर ।
११. रा—तत्र ।
१२. कै—प्रेष्यः प्रेष्यः ।
१३. अ भ च—कथंचन ।
१४. रा—‡ भवतार्यं ।

६९] स्वामी किलाग्रे सैन्यस्य गतिरेका प्लवङ्गमै ॥७४॥ [२३पू
अपि चैवास्य कार्यस्य भवान् गतिररिन्दम । [२४पू
७०] तस्माद् कलत्रवत् तैस्त्वं परिपाल्यः सदा भवान्॥७५॥ [२३ उ
मूलमर्थस्य संरक्ष्यमेष कार्यविनिश्चयः ।
७१] मूले हि सति सिद्ध्यन्ति गुणाः पुष्पफलादयः॥७६॥[२४ उ
७२पू] तद् भवानस्य कार्यस्य साधने सत्यविक्रमः ।
N] बुद्धिविक्रमसम्पन्नो हेतुरेकः परन्तपः ॥ ७७॥ [२५
७२उ] वयं तव महाबाहो शाखापुष्पफलोपमाः ॥७८॥ [N
गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ।
७३] वयं भवन्तमाश्रित्य समर्था अर्थनिश्चये ॥७९॥ [२६
उक्तवन्तं महाप्राज्ञं जाम्बवन्तं महाकपिः ।
७५] प्रत्युवाच ततः श्रीमान् वालिसूनुरथाङ्गदः ॥८०॥ [२७
पुनः खल्विदमस्माकं कार्यं प्रायोपवेशनम् । [२८ उ
७७] न ह्यकृत्वा हरिपतेः सन्देशं तस्य धीमतः ॥८१॥
७८पू] तत्रापि गत्वा प्राणानां पश्यामि परिसंक्षयम् । [२९
८२उ] स हि प्रसादे कोपे च हरीणां नित्यशः प्रभुः ॥८२॥
८३पू] अकृत्वा तस्य सन्देशं विनाशो गमने भवेत् । [३०

---

१. म—किलास्य ।
२. म—गतिरेषा ।
कै व ल₁—गतिरेकः ।
३. कै म ल₁—प्लवंगमाः ।
ल₂ व भ—प्लवंगमः ।
४. कै ल₂ च—कलत्रवत्तु त्वं ।
म—†कलत्रवांस्तु त्वं ।
म—‡कलत्रवत्तु त्वं ।
५. म—नास्ति ।
६. म च—०मसंपन्नो ।
७. ल₁—परंतप ।
८. ल₁—०सत्तमः ।
९. रा म च—समर्थोऽर्थविनिश्चये ।
म—समर्थश्च विनि० ।
१०. रा—हि कृत्वा ।
११. कै—†विभुः ।
१२. कै—प्रभुः ।

८५उ ] तद् यथैवास्य कार्यस्य न भवत्यन्यथा गतिः ॥८३॥

तद् भवानिह दृष्टार्थः सञ्चिन्तयितुमर्हति । [११

८६] सोऽङ्गदेन तथा वीरः प्रत्युक्तः प्लवगेश्वरः ॥८४॥

जाम्बवानर्थवत् प्राह वालिपुत्रमनिन्दितम् । [१२

९१] येनै ते वीर वैर्योऽहं न किञ्चित परिहास्यति ॥८५॥

९२पू ] अहं सन्देशयाम्येनं यः कार्यं साधयिष्यति ॥८६॥[१३

ततः प्रवीरं प्लवतां वरिष्ठ-

मेकान्तमाविश्य सुखोपविष्टम् ।

सन्देशयामास महाऽनुभावं

९७] हरिं स वृद्धो हनुमन्तमेव ॥८७॥ [१४

इत्यार्षे रामायणे किष्किन्धाकाण्डे वानरमन्त्रणं नाम

षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१. रा—रहमस्याः ।

२. रा अ ब म म—०तुमर्हसि ।

३. रा—ये ।

४. कै ब म—वर्योवं ।

अ च—कार्योवं ।

रा—अवर्योवं ।

म—कार्यार्थे ।

५. च—अयं ।

६. कै रा ल, ब म छ, रा—समिदं

अ च—सब्रह्मो ।

७. रा म च—नास्ति ।

छ, ब म रा—किञ्चित्वा० ।

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
१] जाम्बवान् समुदीक्ष्यैवं हनूमन्तमथाब्रवीत् ॥¹१॥ [१
वीर वानरलोकस्य सर्वशास्त्रार्थकोविद ।
२] तूष्णीमेकान्तमाश्रित्य हनुमन् किं न भाषसे ॥२॥ [२
९उ] हनुमन् कपिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥३॥ [३
१०] अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः ।⁷ [४पू
N] पक्षयोर्यद् बलं तस्य तावद् भुजबलं तव ॥४॥
११पू] विक्रमश्चापि तेजश्च सत्त्वं च हरिपुङ्गव ।¹⁰[६
१२पू] विशिष्टं सर्वभूतानां किमात्मानं न बुध्यसे ॥¹¹५॥ [७उ
यादृशो वैनतेयस्य वेगो वेगवतो महान् ।
N] तादृशस्तव वेगो हि किमात्मानं न बुध्यसे ॥¹¹६॥ [N

---

१. ळ$_1$—निषण्णां ।
म—मधुरां ।
२. कै म—०दीक्ष्येव ।
रा—समुदस्याथ ।
३. रा—अतः परमष्टपञ्चाशस्य सर्गस्याद्यः श्लोकः संस्तूयमानो हनुमान् इत्यादिः प्रमादाल्लिखितः ।
४. रा—तूष्णींमेव समाश्रित्य ।
म—तूष्णीमेकान्तमाश्रित्य ।
५. कै ळ$_2$—न बध्यसे ।
रा ळ$_1$ ब म शा—न बध्यसे ।
६. म—योश्चैव ।
७. म—अतः परमधिकः पाठः—
गरुत्मानिति विख्यात उत्तमः सर्वपक्षिणां ।
बहुशोपि मया दृष्टः सागरे मकरालये ।
भुजंगानुद्धरन् पूर्वं महावेगो महाबलः ॥
८. अ च—तव ।
९. अ म च—गोमयं तव दृश्यते ।
१०. अ म च—अतः परमधिकः पाठः—
बलं बुद्धिश्च तेजश्च सत्वं च हरिपुंगव ।
ळ$_1$—नास्ति ।
११. म—नास्ति ।

१२ब ] उत्तमाप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला । [८पू
१३पू ] अभिशापादभूत् तात वानरी कामरूपिणी ॥७॥ [९ब
१४पू ] अञ्जनेति परिख्याता पत्नी केसरिणो हरेः । [८ब
१३ब ] दुहिता विरजस्यासौ वानरस्य महात्मनः । [१०पू
१४ब ] अभिशापक्षयात् जाता पुनस्त्रिदिवचारिणी ॥८॥ [N
कपित्वे सा तु चार्वङ्गी कदाचित् कामरूपिणी । [१०ब
१५] मानुषं विग्रहं कृत्वा यौवनोत्तमशालिनी ॥९॥
व्यचरत् पर्वतस्याग्रे प्रावृष्यम्बुदसंकुले । [११ब
१६] विचित्रमाल्याभरणा महार्हक्षौमवासिनी ॥ १० ॥ [११पू
तस्या वस्त्रं विशालाक्ष्याः पीतं रक्तदशं ततः ।
१७] स्थितायाः पर्वतस्याग्रे आरुतोऽरहरच्छुभम् ॥११॥ [१२
स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ ।
१८] स्तनौ च पीनौ सहितौ सुनासं चारु चाननम् ॥१२॥ [१३
तां विशालायतश्रोणीं तनुमध्यां तपस्विनीम् ।
१९] दृष्ट्वैव शुभसर्वाङ्गीं पवनः संमवेपत ॥१३॥ [१४
स तां भुजाभ्यां पवनः सुनेत्रां परिषस्वजे ।

---

१. कै रा ल$_1$ ब म ल$_2$ ग—
  + ०माप्सरसाप्येषा ।
२. घा म—पुंजिकस्थली ।
  च—पुंजिककला ।
३. कै म श—अंजनीति ।
४. म च—०वानराजस्यासौ ।
म—० ता कुंजरस्यासौ । ( सुपा० च प्राप्तशोधनेन )
५. अ म च—चारुसर्वाङ्गी ।
६. भ—पीतरक्तदशं ।
७. कै रा ल$_1$ ब ल$_2$ श—स्थिता सा ।
  म—स्थितास्या ।
८. रा—†०रछदे ।
अत्र 'मारुतोऽपाहरच्छनैः' इति शाखान्तर-
  पाठो युज्यते ।
९. रा ल$_1$ ब म च—सुसंहते ।
१०. म च—शुभचार्वंगीं ।
११. घ—समवैक्षत ।

२०] मदनाविष्टसर्वात्मा गतात्मा तामनिन्दिताम् ॥१४॥ [१९
सा तत्र कोपसम्भ्रान्ता मुनेर्गो वाक्यमब्रवीत् ।
२१] एकपत्नीव्रतमिदं को नाशयितुमिच्छति ॥ १५ ॥ [१६
अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ।
२२] न त्वां हिंसामि कल्याणि मा ते भूद् बुद्धिरन्यथा॥१६॥ [१७
मनसाऽस्मि गतो यत्त्वां परिष्वज्य मनस्विनि ।
२३] वीर्यवन्तं महासत्त्वं जनयिष्यसि शोभने ॥१७॥ [१८
स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ।
२४] मारुतस्यौरसः पुत्रस्तेजसा च पितुः समः ॥१८॥ [N
उद्यन्तं हि त्वमादित्यं बालो भूत्वा महावने ।
२५] ग्रहीतुकामः क्रीडार्थमुत्पपाताम्बरं बली ॥१९॥ [२१
शतानि यातम् त्रीण्यूर्ध्वं योजनानां महाकपे ।
२६] तेजसाऽर्कस्य निर्धूतो न विषादं गतस्तदा ॥२०॥ [२२
यमेव दिवसं त्वं च ग्रहीतुं भास्करं प्लुतः । [N
N] तमेव दिवसं राहुः संजिघृक्षुर् दिवाकरम् ॥२१॥
उपाजगाम त्वां दृष्ट्वा शक्रस्त्वामुपचक्रमे । [N

---

१. म—तु सुसंभ्रांता ।
२. च—सुमित्रा वा०
ल, म – त्रुटितः पाठः ।
श—अंजनी वा० ।
३. कै रा ल, अ च म ल, श च—
यत्त्वां ।
४. म—अतः परमधिकः पाठः—
वीर्यवान् बुद्धिसंपन्नः पुत्रस्तव भविष्यति ।
स त्वं केसरिणः पुत्रं तेजसा चापि मत्समं ॥
५. कै—क्षेत्रजो ।
६. कै रा ल, अ च म—उद्यतं ।
श—तपंतं । ल, —उदितं ।
७. ल,—समभ्युदितं ।
८. कै—ऽसंजिघृक्षुर् ।
९. अ म श—तं ।
१०. म – शतं त्वमुत्पपातो । हस्तकर-
हस्तेन । 'त्वरितं योजनानां'
इति मूले ।

तुभ्यं तदा वरं दत्त्वा सह देवैः प्रजापतिः ।
N] पितरं ते पुरस्कृत्य प्रत्यागच्छद् यथाक्रमम् ॥३२॥ [N
२९ छ] त्वं हि वायुसमस्तात जवेन कपिकुञ्जर । [३१ छ
वयमद्य गतप्राणा भवानस्मासु साम्प्रतम् ।
३०] तेजो बलसमायुक्तः पक्षिराज इवोत्तमः ॥३३॥ [३२
स इदानीमहं वृद्धः प्लवने मन्दविक्रमः ।
३३] साम्प्रतं बलमस्माकं भवान् सर्वगुणान्वितः ॥३४॥ [३५
तद् विलम्बस्व विक्रान्तं प्लवतामुत्तमो ह्यसि ॥३५॥ [३६पू
३४] यस्तु विक्रमतेऽहंसो विक्रमे समुपस्थिते ।
पर्जन्यमिव भूतानि लोकस्तमनुजीवति ॥३६॥ [N
३५] एतावान् पुरुषार्थो हि विक्रमश्च महामते ।
यो युक्तो योगशास्त्राभ्यां प्रयुक्तः पौरुषेण च ।
३७] कर्मणा चाप्युपायज्ञः सोऽस्यां धुरि नियुज्यते॥३७॥[N
३६पू ] तस्य पौरुषमश्नन्ति मित्रस्वजनबान्धवाः ॥३८॥ [N
तदप्रमेयं वचनं सम्यग् विज्ञाय भाषितम् ।
३८] अथोचुरनुमान्यैवं वानरा वानरर्षभम् ॥३९॥ [N
विक्रमश्च महत् तेजो लङ्घने साधको ह्यसि ।
३९] अप्रमेयाप्रमेयस्य परं पारं महोदधेः ॥४०॥ [N

---

१. कै रा ल$_1$ अ ब म ल$_2$ श च— † तावत्समस् ।
२. अ म च—प्लवने ।
३. कै— ० कुंजर: ।
४. श— † इव क्रमः ।
५. रा ल$_1$ ब म ल$_2$ श — ० वर्मी महाद्युत: ।
६. अ च—सर्वगुणान्वित: ।
७. अ म च—ऽहं ।
म—'ह्सो' इत्यपरहस्तेन
८. कै रा ल$_1$ अ म ल$_2$ श म च— एतावत् ।
९. कै रा ल$_1$ अ म ल$_2$ श च— पुरुषार्थ ।
१०. रा— नियोज्यते ।
११. म—ऽोचिरे ।

विस्मापयन् जगत् सर्वं प्रक्रमस्व महामते ।
४०] सीतायाश्चिरनष्टायास्त्वमद्य पदवीं व्रज ॥४१॥ [N
कथ्यतां त्रिषु लोकेषु त्वद् यशः पुण्यकर्मभिः ।
४१] अनौपम्यमिदं कर्म लङ्घनं लवणाम्भसः ॥४२॥ [N
यशसा योजयात्मानं हर ज्ञातिसुदुष्कृतम् ।
४२] निर्देशसिद्ध्या भर्तारं परित्राणेन राघवम् ॥४३॥ [N
४४ उ] विषण्णांस्तु हरीन् सर्वान् हनुमन् किमुपेक्षसे ।
विक्रमस्व महाभाग विष्णुस्त्रीन् विक्रमानिव ॥४४॥ [१८
४५] समर्थो ह्यनिलस्यासि गतिं गन्तुं सुदुर्गमाम् । [N
त्वद्वीर्यं द्रष्टुकामेयं समग्रा हरिवाहिनी ॥४५॥ [१६ उ
४३] उत्तिष्ठ हरिशार्दूल लङ्घयस्व महाऽर्णवम् ।
४४पू ] वायोरपि गतिर् नैषा हनुमन् या गतिस्तव ॥४६॥ [१७
ततः कपीनां प्रवरेण देशितः
प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां कपिवाहिनीं तदा
४६] चकार रूपं प्लवनाय देशितः ॥४७॥ [१९

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमत्प्रोत्साहनं नाम
सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१. म—+ • श्चिरनष्टायास्त्वमद्य ।
२. रा—+ कथ्यतां ।
रा—कथितं ।
३. च—हनूमन् ।
४. के रा ल$_1$ व म ल$_2$ श—
ह्यनिलस्यास्य ।
म—ह्यनिलस्यापि ।
५. भ—सुदुर्गमां ।
६. अ भ च—या हनुमन् ।
७. श—दर्शितः ।
८. ल$_1$ व म श—देशितः ।
९. ल$_1$ व म ध—किष्किन्धा० ।
म च—नास्ति ।

संस्तूयमानो हनूमान् व्यवर्धत महाबलः ।
१] समाविध्य च लाङ्गूलं चरणौ चाचलोपमः ॥१॥ [४

तस्य संस्तूयमानस्य वृद्धैर्वानरयूथपैः ।
२] तेजसा पूर्यमाणस्य रूपमासीच्च दुर्गमम् ॥२॥ [५

कपिभिः स्तूयमानस्य तदा बलवतो बलम् ।
N] प्रवृद्धं हृष्टमनसः पर्वणीव महोदधेः ॥३॥ [N

आत्मस्थेन तु तोयेन वर्धते सागरो यथा ।
N] तथाऽऽत्मस्थेन वीर्येण प्रवृद्धः कपिकुञ्जरः ॥४॥ [N

यथा चन्द्रमसो वृद्ध्या वर्धते सागरोऽम्भसा ।
३] ववृधे स्तूयमानस्य तथा वीर्यं हनूमतः ॥५॥ [N

यथा विजृम्भते सिंहो विबुद्धो गिरिगह्वरे ।
४] मारुतस्यौरसः पुत्रस्तथा समुपजृम्भितः ॥६॥ [६

अशोभत मुखं तस्य जृम्भमाणस्य धीमतः ।

---

१. कै रा ल१ अ ब म श च—
चरणैश्चाचलोपमः ।
ल२—०चलोत्तमः ।
२. कै रा ल१ अ ब म श च—
दुर्विगा० ।
३. ल२—नास्ति ।
४. रा ल२ अ ब च—स्तूयमानस्य ।
५. म—० मासीद्विद्युत्तमं ।
६. कै म ल२ श—नास्ति ।
७. कै म ल२ श—नास्ति ।
ब—† कामिभिः स्तू० ।
म—कपेः संस्तूयमानस्य ।
८. रा ल१ ब म—आत्मस्थेनैव ।
श—आत्मस्थेन च ।
९. † तोयेन ।
१०. म—† ववृधे ।
११. कै—‡ विवृधे । च—नास्ति ।
१२. ल१—† विबद्धे ।
ब—† विबुद्धा ।
१३. कै रा अ म ल२ श म च—
० पजृंभते ।
१४. कै रा म श—‡ ० माणस्य ।

५] तरुणादित्यसंकाशं विधूमं इव पावकः ॥७॥ [७
हरीणामुत्थितो मध्यात् संप्रहृष्टतनूरुहः ।
६] अभिवाद्य हरीन् सर्वानिदं वचनमब्रवीत् ॥८॥ [८
तदेतच्छतकृत्वोऽपि गन्तव्यं शतयोजनम् ।
८] अहमेतं गमिष्यामि प्रीताः सन्तु वनौकसः ॥९॥ [N
एवं भवतु विक्रम्य लङ्घयिष्यामि सागरम् ।
७] कृतार्थश्चागमिष्यामि प्रीताः सन्तु प्लवङ्गमाः ॥१०॥ [N
बलं च मम वीर्यं च पिता यश्च मम प्रभुः ।
९] मरुतश्चैव यद्वृत्तं तत् सर्वं श्रोतुमर्हथ ॥११॥ [N
प्रत्ययार्थं स्ववीर्यस्य कुलं वक्ष्यामि यादृशम् ।
१०] न विस्मयकृताद् भावादौत्सुक्यात् प्रवदाम्यहम् ॥१२॥ [N
इदं केसरिणस्तस्य पितुरासीच्छ्रुतं मया ।
११] मम जन्म यथा सत्यमद्भुतं मातरिश्वनः ॥१३॥
१२पू] पश्चिमस्य समुद्रस्य तीर्थं पुण्यमृषिष्टुतम् ॥
N] इदं केसरिणस्तस्य तीर्थं पुण्यमृषिष्टुतम् ।
१२उ] प्रभासमृषयो यत्र मज्जन्ति सुसमाहिताः ॥१४॥ [N
तेष्वेकस्त्वग्रबलो नाम धृष्टः कश्चिन्महागजः ।
१३] गेतानृषीन् भीमबलो जघान किल वीर्यवान् ॥१५॥ [N

---

१. म—० स्यसंकाशो ।
२. अ च—† विधूमं इव पावकं ।
३. श—† ० मर्थितो ।
४. म—यदेत० ।
५. कै—‡ वनौकसाः ।
६. ल₁—संक्रम्य ।
७. कै ल₁ अ म ल₂ श—मागतश्चैव ।
८. वै—प्रविशाम्यहं ।
९. कै रा ल₁ अ ब म ल₂ श च—नास्ति ।
१०. कै रा ल₁ ब म ल₂ श—तं संप्रश्न० ।
११. कै रा ल₁ अ ब म ल₂ श च—द ( ? दु ) दः ।
१२. च—स तत्पुषो० ।

तदुपस्पर्शनं पुण्यं गच्छन्तमृषिपूजितम्।
१४] भरद्वाजमृषिं शान्तं गजः सोऽभ्यद्रवद्द्रुतम् ॥१६॥ [N
ततः पर्वतकूटस्थः पिता मम महाबलः।
१५] संददर्श महात्मानं हस्तिना समभिद्रुतम् ॥[1] १७ ॥ [N
ततो नादं महाभीमं कृत्वा मम पिता मृशम्।
१६] तस्योपरिष्टान्न्यपतत् कुञ्जरस्य महाबलः[3] ॥१८[4]॥ [N
तं नखैश्च सुतीक्ष्णाग्रैर्दन्तैश्चैव पिता मम।
१७] संप्रमथ्याक्षिणी तस्य बिभेद कपिकुञ्जरः ॥१९॥ [N
उत्प्लुत्य[5] च स वेगेन पिता मम कपीश्वरः।
१८] तस्य वक्त्रादुभौ दन्तावुज्जहार बलाद् बली ॥२०॥ [N
उत्पाट्य सालवृक्षं च बलेन महता ततः।
N] विध्वंसयितुमारेभे[6] तं गजं च[7] पिता मम[8] ॥२१॥ [N
तस्मिन् हते महावीर्ये पितरं मे महामुनिः।
२०] गृह्याभ्ययान् मुनिभ्यश्च न्यवेदयत तं कपिम् ॥२२॥ [N
योऽसौ रौद्रो गजस्तीर्थं पुण्यमुत्सादयन् महत्।
२१] अनेन कपिराजेन स हतोऽक्लिष्टकर्मणा ॥२३॥ [N
भवन्तो दातुमर्हन्ति वरमस्मै यशस्विने।
N] यमिच्छति हरिश्रेष्ठः केसरी शत्रुसूदनः ॥२४॥ [N

---

१. कै अ म—दांतं।
ख—यांतं।
२. रा—नास्ति।
३. अ म ख—महाबली।
४. रा—नास्ति।
५. रा छ, अ ब ख—अप्लुत्य तु।
म—प्रत्याप्लुत्य०।
६. कै ल, ब म—विध्वंसितु०।
रा ख—‡ विध्वंसयतु०।
७. अ म ख—कपिकुञ्जरः।
८. रा—महान्।

N] ऋषयश्चापि तं दृष्ट्वा एवमस्त्विति वानराः ॥२५॥
ततस्ते मुनयस्तस्मै वानराय ददुस्तदा । [N
२३] पित्रे मम महात्मानो वरं वेदविदां वराः ॥२६॥
ततो मम पिता वव्रे वरं मारुतविक्रमम् । [N
२४] लभेय भगवन् पुत्रं कामरूपिणमव्ययम् ॥२७॥
ततो मे वर्तमाना सा यौवने जननी पुरा । [N
२७] विचचाराञ्जना नाम महीं सगिरिकाननाम् ॥२८॥
दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः । [N
२८] संदृष्टा मलये दिव्ये पर्वते कामरूपिणी ॥२९॥
सागरे सा शिरःस्नाता रक्तचन्दनरूषिता । [N
२९] प्रकीर्णकेशा तोयार्द्रा तस्थौ मलयमूर्धनि ॥३०॥
ततो मनीषिणां तेषां वचनात् पुण्यकर्मणाम् । [N
N] सा वै गिरिवरे दिव्ये चचार शुभदर्शना ॥३१॥
रूपयौवनसंपन्नां तां दृष्ट्वा मारुतस्तदा । [N
३०] बाहुभ्यां संपरिष्वज्य प्राञ्जलिर् वाक्यमब्रवीत् ॥३२॥
मारुतोऽस्मि विशालाक्षि प्राणः सर्वशरीरिणाम् । [N
३१] अवशस्त्वामभिगतः संकल्पेजश्चराहतः ॥३३॥

---

१. कै म—† वानरः ।
२. रा—† वानरास्तस्मै ।
३. कै रा ल, भ म ल, श भ च—ददुस्तथा ।
४. कै रा ल, ब म म—‡ कमेयं ।
५. ल, म ल, श—० नास्तौ ।
६. रा—० रोजनी ।
७. ल, ब म—० मधूषिता ,
८. म च—†० केशास्तोयार्द्रास्तस्थौ ।
म—प्रकीर्णकेशास्तोयाद्रास्तस्थौ ।
९. कै रा ल, ब म ल, श—मनः प्रिया तेषां वने वै ।
१०. म—अस्य स्थाने—अवशस्त्वामुपगतः संकल्प० ।
११. ल, म—प्राणाः ।
१२. कै रा ल, ब म ल, श—अवशस्त्वामुपगतः ।
रा—संकल्पजमारीरितः ।
१३. कै रा ल, ब म ल, श—संकल्पजमारीरितः ।

ममाभ्यागमने दोषं न प्राप्स्यसि वरानने ॥३४॥ [N
१२] वानरेन्द्रश्च मे पुत्रो भविष्यति महाबलः ।
वीर्यवान् बुद्धिसंपन्नः सत्त्ववान् बलविक्रमी ॥३५॥ [N
१३] अवध्यश्च महास्त्राणां ब्रह्मादीनां भविष्यति ।
इत्येवं जनकः श्रीमान् मारुतो मे वरं ददौ ॥३६॥ [N
१४] अरूपः सर्वभूतात्मा हुताशनसखोऽनिलः ।
बलवानप्रमेयश्च वायुराकाशगोचरः ॥३७॥ [९उ
१५] तस्याहं भीमवेगस्य शीघ्रगस्य महात्मनः ।
मारुतस्यौरसः पुत्रः प्लवने नास्ति मे समः ॥३८॥ [१०
१६] उत्सहे चापि विस्तीर्णमुल्लिखन्तमिवाम्बरम् ।
१७पू] मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥३९॥ [११
उदयात् प्रस्थितं चापि ज्वलन्तं रश्मिमालिनम् ।
४१] अनस्तमितमादित्यमभ्येतिक्रान्तुमुत्सहे ॥४०॥ [१५
N] पृथिव्या दक्षिणादन्तादुत्तरं गन्तुमोजसा ।
४०उ] तथाऽहं भूमिमुत्सृज्य पुनरागन्तुमुत्सहे ॥४१॥ [N
१९उ] पन्नगाशनमाकाशे पेतन्तं क्षिप्रमेव तम् ।
N] वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥४२॥ [१४
उरुवातेन महता भीमेनाकाशगो महान् ।
४२] उत्सहे पर्वतान् सर्वांस्तुङ्गान् पातयितुं क्षितौ ॥४३॥ [N

---

१. अ म च—बलविक्रमः ।
२. अ म च—मारुतः श्रीमान् जनकै
३. कै म—नास्ति
४. म—‡ ० स्यमपतिक्रांत० ।
ध्रा—० स्यमभ्येत्य क्रांतु० ।
म—० स्यमत्यतिक्रांतु । ०
५. म—तपंतं ।
६. अ—† पक्षसेविते ।
म च—‡ पक्षिसेविते ।
७. अ म च—० गान् ।
८. म—सर्वान् सपान् ।

१७ उ] ममोरुभुजवेगेन भविष्यति संमुद्गुतः ।
संमूर्छितमहाग्राहः समुद्रो वरुणालयः ॥४४॥ [११
१८] बाहुवेगैमग्गुणेन समुद्रेण समुत्सहे ।
१९पू ] समाप्लावयितुं लोकान् सपर्वतवनद्रुमान् ॥४५॥ [१२
सागरं क्षोभयिष्यामि दारयिष्यामि मेदिनीम् । [१७ उ
N] पर्वतान् पातयिष्यामि प्लवमानः प्लवङ्गमाः ॥४६॥
तरिष्याम्यूरुवेगेन प्लवमानो महार्णवम् । [१८
४१] लतानां विविधं पुष्पं पादपानां च सर्वशः ॥४७॥ [१९पू
अनुबन्धेन पुष्पाणां विविधेन सुगन्धिनाम् । [N
४४] भविष्यति हि मे पन्था वायोःपन्था इवाम्बरे ॥४८॥ [१९ उ
राजयिष्यन्तमाकाशमुत्पतिष्यन्तमेव च ।
५५] द्रक्ष्यन्ति सर्वभूतानि निपतन्तं वेनान्तरात् ॥४९॥ [२०
महामेघप्रतीकाशं मां द्रक्ष्यन्ति वनौकसः ।
५६] नेभ आवृत्य बाहुभ्यां ग्रसमानमिवाम्बरम् ॥५०॥
विधमिष्यामि जीमूतान् कम्पयिष्यामि पर्वतान् ।
५७] सागरं क्षोभयिष्यामि प्लवमानः समाहितः ॥५१॥ [२२
महासंहननोपेतौ महान्तौ पुरुषर्षभौ ।

---

१. म—समुच्छ्रयः ।
२. म—समुत्थित० ।
३. म च—० ग्राममुत्सेन० ।
अ—बाहुवेग० ।
४. च ल२ श—प्लावयिष्यामि ।
म—द्रुम० ।
५. श च—० व्यामृष्ट० ।
६. म—सुगन्धिना ।
७. के ल१ अ च म ल२ श भ च—
राजयंतमिवाका० ।
८. के ल१ च म ल२ श—वा ।
९. श—० तंतमिवांवरात् ।
१०. अ—नभआवृत्य ।
भ—नभः मावृत्य ।
११. म—क्षोभयि० ।

५८] ऋष्यमूकात् पुनः शैलादुभौ तौ रामलक्ष्मणौ । [२४पू
N] आनयिष्यामि वैदेह्याः सकाशं वानरर्षभाः ॥५२॥ [N
५९ उ] आनयिष्यामि वैदेहीं[1] रामस्य महिषीं प्रियाम् ।
N] प्रसह्य भुजगं भीमं गरुत्मान् सागराद् यथा ॥५३॥ [२४ उ
६० उ] विहरिष्यामि वेगेन नानानक्रसमाकुलम्[2] । [N
६०पू] वितत्य गरुडः पक्षौ हरन्निव[3] महोरगम् ॥५४॥
इहैव संप्रतीक्षध्वं[4] सर्वे वानरयूथपाः । [N
६१] अहमेतद् गमिष्यामि योजनानां शतं द्रुतम् ॥५५॥
आदित्यचन्द्रचरिते[5] ग्रहनक्षत्रसेविते । [N
६२] वैनतेयस्य वा शक्ति र्मम वा मारुतस्य वा ॥५६॥ [२३
ऋते सुपर्णराजानं मारुतं वा महाजवम् ।
६३] न तद् भूतं प्रपश्यामि यो मां प्लुतमनुप्लवेत् ॥५७॥ [२५
निमेषान्तरमात्रेण[6] निरालम्बनमम्बरम्[7] ।
६४] सहसा निष्पतिष्यामि[8] घनाद् विद्युदिवाम्बरे[9] ॥५८॥ [२६
भविष्यति हि मे रूपं क्रममाणस्य सागरे ।
६५] विष्णोः प्रक्रममाणस्य तदा[10] देवासुरे[11] यथा ॥५९॥ [२७
बुद्ध्या चाहं प्रपश्यामि मनः कथयतीव मे ।
६६] अहं द्रक्ष्यामि वैदेहीं रामस्य महिषीं प्रियाम् ॥६०॥ [२८
गरुडस्य समो वेगे मारुतस्य समो जवे । [२९

---

१. कै रा अ भ च—वां देवीं ।
२. च—नाना ͜ मकराकुलं ।
३. अ च—हरतीव ।
४. अ भ च—मां प्रतीक्षध्वं ।
५. भ—| ͜ च ।
६. भ—‡ निमिषांतर०
७. भ—सुनिरालम्बमंबरं ।
८. कै रा ल₁ अ च भ ल₂ श च—निपति० ।
९. अ भ च—विद्युदिवोद्गते ।
१०. कै रा ल₁ अ च भ ल₂ श च—यथा ।
११. कै + देवासुरे ।

६७] अयुतं योजनानां हि क्रमेयमिति मे मतिः ॥६१॥
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः ।
६८] हरेयममृतं हस्ताद् विक्रम्य सहसा स्वहम् ॥६२॥ [१०पू
लक्ष्मीं चन्द्राद्धरेयं च सूर्यान् तेजस्तथोर्जितम् । [N
६९] लङ्कां चापि समुत्क्षिप्य गच्छेयामिति मे मतिः॥६३॥ [१० उ
तमेवं वानरश्रेष्ठं गर्जन्तममितौजसम् ।
७०] प्रत्यूचुर् हरयस्तत्र मारुतस्यौरसं सुतम् ॥६४॥ [११
वीरः केसरिणः पुत्रो वेगवान् मारुतात्मजः ।
७१] ज्ञातीनां तुमुलस्त्रासस्त्वया वीर प्रणाशितः ॥६५॥ [१३
तव कल्याणरुचयः कपिसंघाः समागताः ।
७२] मङ्गलान्यर्थसिद्ध्यर्थं करिष्यन्ति प्रयास्यतः ॥६६॥ [१४
कपिराजप्रसादेन कपिवृद्धमतेन हि ।
७३] गुरूणां च प्रसादेन प्लवस्व त्वं महाऽर्णवम् ॥६७॥ [१५
स्थास्यामो ह्येकपादेन यावदागमनं तव ।
७४] त्वद्गतानि हि सर्वेषां जीवितानि वनौकसाम् ॥६८॥ [१६
एवमुक्तः परिषदा सोऽङ्गदेन च वानरः । [N
७५] अभिवाद्याभिवाद्यांश्च प्राव्रजत् स महाकपिः ॥६९॥

---

१. म—आयतं ।
२. म श—० स्तथोर्जितं ।
३. म—चापि ।
४. म च—† तमेव ।
५. अ म च—वानरश्रेष्ठ ।
६. क$_1$—† कपिसंगाः ।
७. म—† मंगलान्यपि तथाक्कार्यं ।
क$_2$ श—मंगलानि तथात्यर्थं ।
८. म—† प्रतिष्ठिता ।
९. रा—† ० वृद्धमेन ।
१०. अ भ च—च ।
११. कै रा क$_1$, च म क$_2$ श—
विहितानि ।
१२. अ च च—० वाभिवाद्यांश्च ।
१३. रा—‡ प्राव्रजत ।
अ भ च—प्राचुंचत ।

वीक्षांचक्रे च संहृष्टः समन्ताद् वानरर्षभः ।
७३] उत्प्लुत्य च ततस्तूर्णमुवाच हरियूथपान् ॥७०॥ [N
न चिरादागमिष्यामि प्राप्य लङ्कामितः पुरीम् ।
N] अङ्केनादाय वैदेहीं हत्वा रावणमाहवे ॥७१॥ [N
एतावदुक्त्वा वचनं प्रतीतः
प्रियं नरेन्द्रस्य च राघवस्य ।
आमन्त्र्य चामन्त्र्य च वानरांस्तान्
N] स लङ्घनार्थं गिरिमारुरोह ॥७२॥ [N
स वेगवान् वेगसमाहितात्मा
हरिप्रवीरः परवीरहन्ता ।
मनः समाधाय महाप्रभावो
N] जगाम लङ्कां मनसा महात्मा ॥७३॥ [५१

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमद्गर्जनं नाम
अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

१. ल१—‡ वीक्षांचक्रे ।
२. अ भ च—उत्पत्य ।
३. कौ—‡ चिराद् ।
रा ल१ ब भ ल२ शा—‡ चिराद् ।
४.
५. कौ रा ल१ अ ब भ ल२ शा च—संलंघ० ।
६. रा—परवीरहर्त्ता ।
७. कौ रा ल१ अ ब भ ल२ शा—समाधाय ।
८. ल१ ब भ शा—[illegible] ।

अथ ते वानराः शूरास्तदात्यर्थं प्रहर्षिताः ।
गुणपूर्वाभिराशीर्भिर्हनुमन्तं[1] प्रतुष्टुवुः ॥१॥
येनौदार्येण मघवान्[2] देवासुरसमागमे ।
क्रान्तवान्युध्यमानस्तु क्रम त्वं तेन तेजसा ॥२॥
यथा विष्णुर्महातेजा पृथिवीं क्रान्तवान्पुरा ।
त्रिविक्रमो महासत्त्वस्तद्धि[3] तेजो बलं च ते ॥३॥
यथा इन्द्रो[4] महाबाहुर्यज्ञे विविधदक्षिणे ।
योगसिद्धो महावीर्यस्तत्ते भवतु मङ्गलम् ॥४॥
त्रिपुरं जघ्नुषः पूर्वं शङ्करस्य महात्मनः ।
बलवीर्यादिसम्पत्तिः[5] सा ते भवतु नित्यदा ॥५॥
मरुतो देवसंमर्दे[6] युध्यन्ते येन संयुगे ।
क्रमतो मङ्गलं तत्ते भवतु प्लवगोत्तम ॥६॥
यथाश्विनौ विवस्वांश्च भाभिः[7] सञ्जातपौरुषः ।
तेजसा तेन हनुमत् प्रक्रमस्व महार्णवम् ॥७॥
ये वै महाह्रयोः पुण्याः सिद्धचारणसेविताः ।
राजयन्त्युत्तरामाशां तेषां प्रक्रम तेजसा ॥८[8]॥
ऋषयो देवगन्धर्वा पिशाचोरगराक्षसाः[9] [10] ।
चन्द्रादित्यौ यथा वीर्यात्[11] प्रक्रमन्ते नभस्तले ॥९॥

---

१. ब म—हनूमंतं ।
२. ब ल₁ दा म—मघवा ।
३. कै ल₁ अ म—०स्त्वद्धि० ।
४. म—इन्द्रो ।
५. ब—०वीर्येस० ।
६. ल₂—देवसमरे ।
७. कै दा ल₁ अ म ल₂ दा भ ब—ताभिस्सं० ।
८. ल₂—नास्ति ।
९. भ—महर्षयः ।
१०. ल₂ नास्ति ।
११. ल₁ अ ब म—नभस्यले । म—नभस्के ।

तथा तेषां च सर्वेषां त्वं विवर्धस्व तेजसा ।
वीर्ययुक्तस्तथा वीरः प्रक्रमस्व महार्णवम् ॥१०॥
आशीर्भिः प्लवगै वीरो हनूमानभिपूजितः ।
अभ्यनन्दत मानार्हो मरुद्भिर्वासवो यथा ॥११॥
अग्निर्हुतवहः साक्षात्स्तूयमानो यथाध्वरे ।
ऋषिभि र्वामनैः संख्ये यथा यज्ञपुरस्कृतः ॥१२॥
वानरै र्हनुमानेवमाशीर्भिः प्रतिपूजितः ।
संपूज्य तान् हरिगणानिदं वचनमब्रवीत् ॥१३॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमत्प्रक्रमं नाम
ऊनषष्टितमः सर्गः ॥ ५९ ॥

---

१. म—‡ विवृधस्व ।
२. कै रा ल₁ भ ब म ल₂ श च—अभिनन्दितस्तु ।
३. भ च — ०क्षामूय० ।
४. कै ल₁ भ ब म म च—महाध्वरे ।
रा—† ०यथाध्वरे ।
च—महाध्वरे ।
५. म — ०र्वामनप्रवरैर् ।
६. रा—‡ ०र्हनुमा० ।
७. कै ल₁ ब म ल₂—† प्रतिपूजितैः ।
म—स्यकम् ।
८—ब म श—किष्किन्धा० ।
अ भ च—नास्ति ।

N] ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ।
नेयं मम महावेगं प्लवतो धारयिष्यति ॥१॥ [३७
एतानि हि नगस्यास्य शिलासङ्कटशालिनः ।
N] शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च ॥२॥ [३८
एतानि मम निष्पेषं पादयोः प्लवगोत्तमाः ।
N] प्लवतो धारयिष्यन्ति योजनानामितः शतम् ॥३॥ [४०
इति तस्य ब्रुवाणस्य सर्वे वानरपुङ्गवाः ।
१] चक्रुः प्रणामं मुदिताः शक्रस्येव मरुद्गणाः ॥४॥ [N
तस्य पुष्पवतीं चित्रां वनमालां महात्मनः ।
२] चक्रुस्ते वानरश्रेष्ठा बाहुभ्यां मङ्गलानि च ॥५॥ [N
स तैः परिवृतः श्रीमान्वानरैर्वानरर्षभः ।
३] आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः ॥६॥ [४१
वृतं नानाविधैर्वृक्षैः शार्दूलमृगसेवितम् ।
४] लतासन्तानसंबाधं नित्यपुष्पफलद्रुमम् ॥७॥ [४२
मत्तद्विजगणैर्जुष्टं सलिलोत्पीडसंवृतम् ।
५] सिंहशार्दूलचरितं मत्तमातङ्गसेवितम् ॥८॥ [४३
महद्भिरुच्छ्रितैः शृङ्गैरुल्लिखन्तमिवाम्बरम् । [४४पू
६] सर्वसत्त्वालयं श्रीमंस्तानुपर्वं समन्ततः ॥९॥ [N
ततस्तं स महातेजा आरुह्य विपुलं गिरिम् ।
७] व्यराजत कपिश्रेष्ठो द्वितीयः पर्वतो यथा ॥१०॥ [N

---

१. म—प्रणामं ।
२. ग—०मालि निघ्नर्शनं ।
३. घ—ईशुभाननी ।
४. म—वानरैः शै० ।
५. म—नगं शै० ।
६. अ च—शार्दूलं मृग० ।
७. कै ल, अ व म ग भ च—श्रीमान्प्रा० ।

N] मेरिहै मार्गमास्थितुन् प्लवगं वायुनिषेवितम् ॥१९॥ [N
पुनरागमनायेति वानरैरभिपूजितः ।
N] इत्येव विप्लुवेत्युक्तो प्लवनाय कृतोद्यमः । [N
वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् ॥२०॥ [सु१,४२व
N] यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ।
गच्छेयमहमिष्यामि लङ्कां रावणपालिताम् ॥२१॥ [४३
N] द्रक्ष्यामि यदि तां नाहं लङ्कायां जनकात्मजाम् ।
अनेनैव प्रवेगेन गमिष्यामि सुरालयम् ॥२२॥ [४४
N] अथवा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः ।
बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ॥२३॥ [४५
सर्वथा कृतकार्योऽहमानयिष्यामि जानकीम् ।
N] आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ॥२४॥ [४६

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमत्पर्वतारोहणं नाम
षष्टितमः सर्गः ॥ ६० ॥

---

१. कै ङ$_1$ म—अतिष्ठन् ।
२. कै रा ङ$_1$ अ व म ल$_2$ श च—१०वें श्लोक ।
३. कै रा ङ$_1$ व म ङ$_2$ श च—अभिप्रेतं ।
४. व श—कृतकृत्योऽहमानयि० ।
५. रा अ व ल$_2$ श म च—०हमानेष्यामीह ।
६. ङ$_2$ म व श—किष्किन्धा० । अ म च—नास्ति ।

एवमुक्त्वा स हनुमान्वानरान् वानरोत्तमः ।
N] ततोऽभ्याववृधे देहो दक्षिणो दक्षिणां दिशम् ॥१॥ [९उ
प्लवगः प्लवगैर्हृष्टैः प्लवने कृतनिश्चयः ।
N] ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वणि ॥२॥ [१०
निष्प्रमाणशरीरं तं विलङ्घयितुमर्णवम् । [११पू
N] ओजस्तेजस्तथा वीर्यं प्रविवेश महाबलम् ॥३॥ [N
प्रगृह्य बलवान् बाहू लङ्कामभिमुखः स्थितः ।
N] बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥४॥ [११उ
स चचालाचलश्चानु मुहूर्तं कपिपीडितः । [१२पू
N] वने सिंहपराघृष्टो मदोन्मत्त इव द्विपः ॥५॥ [N
१४उ] गिरिः प्रकम्प्यमानश्च तेन प्रक्रमता तदा ।
स मुक्तवांस्तदा रक्तं रसं कमलवर्चसम् ॥६॥ [N
१२उ] गिरेस्तस्य समाक्रान्ता हरितालकलायुताः ।
१३पू] सद्रुमाः पक्षिभिः सार्धं पेतुस्ताश्च महाशिलाः ॥७॥ [N
N] पृथिव्यास्तेन शब्देन चुक्षुभे वरुणालयः ॥८॥ [N
१३उ] शिलान्तरगताः सर्पाः पीड्यमाना महाविषाः ।

---

१. अ ल१ ब—†वक्षो ।
२. के अ रा भ—हृष्टः । श—†दृष्टः ।
३. के ल१ ल२ ब म श रा—†रामवृद्ध्यर्थं ।
४. के ल म श अ भ च—विलंघयितु० ।
५. के रा ल१ ल२ ब म श अ च—महाबलः ।
६. अ म च—०वलस्तथा ।
७. के—मदोद्धत ।
अ म च—महोत्पात ।
८. के रा अ म च—०शिखा ।
९. के ल१ ल२ ब म श रा—महाशिलाः ।
अ च—‡महाविषाः ।

१४पू ] सधूमं ज्वलनं घोरं मुमुचु र्लोलितैर्[1] मुखैः ॥९॥ [N
निःश्वसद्भिस्ततस्तैस्तु सर्पैर्[2]विषविनिस्सृतैः[3] ।
N] महेन्द्रः पर्वतः[4] श्रीमान् सपताक इवाबभौ ॥१०॥ [N
शिरोभिः पृथुभिश्चैव पञ्चस्वस्तिकलक्षणैः[5] ।
N] वमन्तः पावकं दीप्तं ददंशु र्दशनैः शिलाः ॥११॥ [१९
तास्तदाशीविषै र्दष्टाः कुपितैस्तैर्महाशिलाः[6] ।
N] प्रदीप्ताः पावकाविष्टा व्यभिद्यन्त सहस्रधा ॥१२॥ [२०
यानि चौषधजालानि[7] तस्मिन् जातानि पर्वते[8] ।
N] विषघ्नान्युरगाणां तु तैस्तु तच्छमितं विषम् ॥१३॥ [२१
अपरे च महाकाया वमन्तोऽग्निं महोरगाः ।
N] निर्झरेभ्यो विनिश्चेरुः[9] कपिपादप्रपीडिताः ॥१४॥ २२
१४ उ] समाक्रान्तो बलवता वानरेण महागिरिः ।
१५पू ] जलधाराः प्रसुस्राव मदराजीरिव द्विपः[10] ॥१५॥ [N
सुतास्तस्मात्तु[11] ता धारास्सलिलस्य समन्ततः ।
रक्तचन्दनसंरक्ताश्[12] चित्राः[13] काञ्चनधातुभिः ।
N] गैरिकाञ्जनसंयुक्ता बभुर्भ्रिर्भास्त्रजो यथा ॥१६॥ [N

---

१. कै—ज्वलितं ।
२. अ च—ज्वलितैर् ।
ल₂ ब म—लोहितैर् ।
म—ज्वलितैर् ।
३. ल₁ ल₂ ब म श—०रपाविनिःसृतैः ।
४. कै रा ल₁ ल₂ ब म अ च—
महेन्द्रपर्वतः ।
५. कै रा—पञ्चः स्वस्ति० ।
ल₂ ब म श—पृथुलस्कि० ।
६. कै—तालदा० ।
७. ल₂—नास्ति ।
८. कै रा ल₂ ल₂ ब म श अ च—
०पधजातानि ।
९. अ म च—विनिष्पेतुः ।
१०. रा च—द्विपाः ।
११. म—प्रसुतास्तस्मा० ।
१२. अ—सर्चदनरसारक्ताश् ।
च—सर्वा...दनसं० ।
१३. ब—चित्रकांचन० ।
१४. श—चाप्यापित० ।

N] विस्मितास्सहितास्तस्थुराकाशे रमणैस्सह ॥ ३२ ॥ [१०

दर्शयन्तो महाविद्या स्ते तु विद्याधरर्षभाः ।

N] सभिया स्तस्थुराकाशे वीक्षाञ्चक्रुश्च पर्वतम् ॥३३॥ [११

शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् ।

N] चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥३४॥ [१२

एष पर्वतसंकाशो हनूमान् मारुतात्मजः ।

N] तितीर्षति महावेगस्समुद्रं सरितां पतिम् ॥३५॥ [१३

रामार्थं रावणार्थं चै चिकीर्षन् कर्म दुष्करम् ।

N] समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥३६॥ [१४

N] देवास्तं ददृशुस्सर्वे तैस्तैः सह महर्षिभिः ॥३७॥ [N

ऋषयस्सह गन्धर्वैस्सिद्धाश्च सह चारणैः ।

N] जातकौतूहलास्तस्थुस्तद्द्रष्टुं महदद्भुतम् ॥३८॥ [N

दुधुवे च स रोमाणि चकम्पे चाचलोपमः ।

N] ननाद सुमहानादं सुमहानिव तोयदः ॥३९॥ [१६

अनुवृत्तं च वृत्तं च लाङ्गूलं लोमभिश्चितम् ।

N] उत्पतिष्यन् स चिक्षेप पक्षिराज इवोरगम् ॥४०॥ [१७

तस्य लाङ्गूलमाविद्धमतिवीर्यस्य पृष्ठतः ॥

N] ददृशे गरुडेनेव ध्रियमाणो महोरगः ॥४१॥ [१८

---

१. के रा म—विपुलांबरे ।
 अ च—†विपुलोंबरे ।
 ल१ ल२ म श—विपुलेम्बरे ।
२. ल१ च—हनुमान् ।
३. म—वा ।
४. ल म च—दुष्प्रापं ।
५. के रा अ ल१, ल२ व म श—

†दुधुवे ।
६. ल१, ल२ व म श—†चाचलोपमः ।
 म—च महार्णवः ।
७. के—¦मचाशुः ।
८. के—†वर्ण ।
९. म—†धूयमानो । अ च—†धूयमानो ।
१०. के रा ल१, ल२ व म—†दृशोरगं ।

बाहू संस्तम्भयामास महापरिघसन्निभौ ॥४२॥
N] समाद्दे कपिः कट्यां चरणौ संचुकोच च ॥४३॥ [३९
स संहृत्य भुजौ श्रीमांस्तथैव च शिरोधराम् ।
N] ओजस्सत्त्वं तथा वीर्यमाविवेशातिवीर्यवान् ॥४४॥ [४०
N] वैनतेयस्य सदृशो बभौ चाप्यनिलात्मजः ॥४५ ॥ [N
मार्गमालोकयद्दूराद्दूर्ध्वं प्रणिहितेक्षणः ।
N] रुरोध हृदये प्राणानाकाशमभिपेदिवान् ॥४६॥ [४१
पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
१८] विकुञ्च्य कर्णौ मतिमानुत्पतिष्यन् महाबलः ॥४७॥ [४२पू
तमुत्पतन्तं वेगात्तु नगास्ते नगरोहिणः ।
N] सस्कन्धविटपास्सर्वे समुत्पेतुस्समन्ततः ॥४८॥ [४८
कपीन्द्रः पथिजातांस्तान् पादपान् पुष्पशालिनः ।
N] उद्वहन्नूरुवेगेन जगाम विमलेऽम्बरे ॥४९॥ [४९

१. रा—‡ ददे: । म च—दधौ ।
२. कै म च—† संचुकोप च ।
म—संकुचयत् ।
३. म च—समाहृत्य ।
म—संहृत्य ।
४. कै म च—०दूर्ध्वप्रणिहि० ।
५. इत ऊर्ध्वं सर्वेषु कोशेषु १०तमसर्गस्था 'वानरान्' इत्यारभ्य 'आनयिष्यामि' इत्यन्ता सार्धपञ्चश्लोकी पुनःपठिता । तत ऊर्ध्वं चायोक्तिः सार्धश्लोकः पुन-रुक्तपाठसङ्क्रमणाय स्यात्—
एवमुक्त्वा तु हनुमान् वानरान् वानरोत्तमः ।
उरःपातं च वेगेन वेगं वेगेन धारयन् ॥
सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ।
६. श—वेगेन ।
७. अ—समं काङ्क्षितान् ।
च—† सकर्णां काङ्क्षिताम् ।
म—† स कायवाङ्किताक्षान् ।
८. श—उद्वहन्नुरुवेगेन ।

१. श—च । २. म—हनुमान् । ३. कै रा ल, ल, व म श म च—वेगवानभिचारयन् । ४. म—सुपर्ण इव ।

ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः ।
N] प्रस्थितं दीर्घमध्वानं सबन्धुमिव बान्धवाः ॥५०॥ [५०
तैमूरुवेगोन्मथिताः सालचन्दनचम्पकाः ।
N] अनुजग्मु र्हनूमन्तं पौरा इव महीपतिम् ॥५१॥ [५१
सुपुष्पिताग्रैः शिखरैः पादपैरन्वितो हरिः ।
N] हनूमांस्तोदयदाकारो बभूवाद्भुतदर्शनः ॥ ५२ ॥ [५२
सारवन्तश्च ये वृक्षा निपेतु र्लवणाम्भसि ।
N] भयादिव महेन्द्रस्य दानवा वरुणालये ॥५३॥ [५३
स नानाकुसुमैः कीर्णः कपिः कुड्मलकोमलैः ।
N] शुशुभे मेरुसंकाशः खद्योतैरिव पर्वतः ॥५४॥ [५४
विमुक्तास्तस्य वेगेन मुक्तपुष्पाश्च ते द्रुमाः ।
N] अवतीर्यंत सलिले निवृत्तास्सुहृदो यथा ॥५५॥ [५५
लाघवेनोपपन्नं च प्लवमानं महार्णवे ।
N] द्रुमाणां विविधैः पुष्पैः कपिं वायुरवाकिरत् ॥५६॥ [५६
पुष्पौघेणानुबन्धेन नानावर्णेन वानरः ।

---

१. म—कपिसत्तमम् ।
२. ङ$_{2}$ म श—। बान्धवः ।
 ब—बन्धवः ।
३. श—०तमुरुवेगो० ।
 रा—वेगोन्मिथिताः ।
४. म—। ०चन्दनचंपुत् ।
 कै रा ळ$_{1}$ ळ$_{2}$ ब म श भ च—
 सालचन्दनचण्पकाः ।
५. कै रा श—महापतिं ।
६. अ च—हनुमांस्तोय० ।
७. कै ळ$_{1}$ म—वरुणालये ।
८. अ च—नानाकुसुमितैः कीर्णः ।
 कै रा ळ$_{1}$ ळ$_{2}$ ब म श—
 नानाकुसुमसंकीर्णः ।
९. कै रा—कपिः कोमलको० ।
 अ च—कपिकुड्मलको० ।
 म—। कपिः कुड्मलको० ।
 ळ$_{1}$ ळ$_{2}$ म—। कपिकुड्मलको० ।
१०. रा—। खद्योत इव ।
११. ळ$_{1}$—अवतीर्य तु ।
१२. कै रा ळ$_{1}$ ळ$_{2}$ ब म श—पुष्पौघेण ।

N] बभौ मेघ इवोदंस्थे सेन्द्रचापतडिद्गुणः ॥५७॥ [५८
प्रचकर्ष महामेघं सपुरोवातविद्युतम् ।
N] प्रबलः कपिराजस्य वायुर्मार्गमवाश्रितः ॥ ५८ ॥ [N
समुत्पतित-मेघस्य समुद्भूत-जलस्य च ।
N] समभासीत्तदा रूपं सागरस्याम्बरस्य च ॥५९॥ [N
तस्य वायूद्धतैः पुष्पैः शरीरं शुशुभे हृतम् ।
२१] ताराभिरभिरामाभी रुचिराभि रिवाम्बरम् ॥६०॥ [N
तस्याम्बरगतौ बाहू शुशुभाते प्रसारितौ ।
२२] पर्वतादभिनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ॥६१॥ [६०
पिबन्निव बभौ चायं सोर्मिजालं महार्णवम् ।
N] विभिन्दन्निव चाकाशं ददृशे स महाकपिः ॥६२॥ [६१
तस्य विद्युत्प्रभाकारे वायुवेगानुसारिणः ।
N] नयने विप्रकाशेते पर्वतस्थाविवानलौ ॥६३॥ [६२
पिङ्गे पिङ्गाक्षमुख्यस्य चक्षुषी परिमण्डले ।
२३] बृहती संप्रकाशेते शनैश्चरबुधाविव ॥ ६४ ॥ [६३
मुखं नासिकया तस्य नम्रया ताम्रया बभौ ।
N] यथा नभसि सन्ध्यायास्ताम्रं सूर्यस्य मण्डलम् ॥६५॥ [६४

---

१. म—इवोदन्वे ।
२. ल₁ ल₂ म श—महावेगं ।
ब—‡ महामेगं ।
३. कै रा ल₁ ल₂ ब म श—सपुरोवात० ।
४. कै ल₁ ब म श भ च—०र्गमिवाश्रितः ।
५. ब—०तिवेगस्य ।
६. कै—०लवकस्य ।
म—०तं जलस्य ।
७. कै—† ०स्यासुरस्य ।
८. अ—वायूद्धृतैः ।
९. कै—नतं ।
१०. अ भ च—चापि ।
११. ल₁—† चक्षुषः ।
श—'चक्षुषी' त्यारभ्य ७०॥त्य- 'तस्ये' त्यन्तः पाठो नास्ति ।
१२. अ भ च—ताम्रया ।

लाङ्गूलं सहसा विद्धं प्लवमानस्य शोभते ।
२५] अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः ॥६६॥ [६५
लाङ्गूलचक्रेण महान् शुक्लदंष्ट्रो हि वानरः ।
N] व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ॥६७॥ [६६
स्फिग्देशेनातिताम्रेण रराज स महाकपिः ।
२६] महता दारितेनेव गिरिर्गैरिकधातुना ॥६८॥ [६७
तस्य वानरसिंहस्य प्लवमानस्य सागरम् ।
२४] कक्षान्तरगतो वायुर्जीमूत इव गर्जति ॥६९॥ [६८
खे यथैव पतन्त्युल्का उत्तरार्धाद्विनिस्सृताः ।
N] सानुमन्तश्च दृश्यन्ते तथा स कपिकुञ्जरः ॥७०॥ [६९
पतत्पतङ्गसंघाते व्यायतः शुशुभे कपिः ।
२७] मेहद्ध इव मातङ्गः कक्षया लम्बमानया ॥७१॥ [७०
उपरिष्टाच्छरीरस्य छायया चावगाढया ।
N] सागरेन्तः समाविष्टा स कपिर्नौरिवाभवत् ॥७२॥ [७१

---

१. कै रा ल, ल२ ब म श—महानुद० ।
२. कै रा ल, ल२ ब म—परिवेशीव ।
३. कै—०धातुभिः ।
४ कै—‡कक्षयाते सतो ।
रा ल, ल२ ब म श—कक्षयान्तर्गतो ।
अ च—कक्षायान्तर्गतो ।
५. कै—पतन्ति यथैवोल्का ।
६. ल२—विनिःसृताः ।
म—‡ विनिःश्रिताः ।
७. ल२ म—पतन्निर्नागसंघा० ।
कै रा ल, ब श—पतन्निर्नगसंघा० ।
अ च—पतत्पतंगसंघा० ।
८. कै रा ल, ल२ ब म श—†पीवितः ।
९. म—प्रवृत्त ।
१०. ब—कक्षया ।
११. कै रा ल, ल२ ब म श—† उपविष्टः शरीर० ।
अ च—उपविष्टाच्छरीर० ।
१२. कै श अ च—सागरे च समा० ।
श—०न्तः समाविष्टः ।
रा म—च समाविष्टः ।
१३. कै—‡ नौरिवाभवत् ।

यं यं देशं समुद्रस्य जगाम स महाकपिः ।
२८] स स तस्याङ्गवातेन सोन्माद इव लक्ष्यते ॥७३॥ [९२
प्लवमानं समालक्ष्य भुजगाः सागरालयाः ।
२९] व्योम्नि तं हरिशार्दूलं सुपर्णमिव मेनिरे ॥७४॥ [७२
सागरस्योर्मिजालानां महतां शैलवर्ष्मणाम् ।
N] प्रतिघ्नंश्च महावेगं पुप्लुवे स महाकपिः ॥७५॥ [७३
कपिवातश्च बलवान्मेघवातश्च निस्सृतः ।
N] सागरं मेघनिर्घोषं कम्पयामासतुर्भृशम् ॥७६॥ [७४
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि ।
N] पुप्लुवे कपिशार्दूलो विकर्षन्निव रोदसि ॥७७॥ [७५
मेरुमन्दरसङ्काशानुद्धूतान्स महार्णवे ।
N] अतिक्रामन्महावेगस्तरङ्गान् गणयन्निव ॥७८॥ [७६
तस्य वेगसमुत्कृष्टं जलं स जलदो (?दं) यथा ।
अम्बरस्थे(?स्थं) विबभ्राज शारदाभ्रमिवाततम् ॥७९॥ [७७
तिमिनक्रझषाः क्रुद्धा दृश्यन्ते विविधास्तथा ।
N] छाया वानरसिंहस्य जले चारुतराभवत् ॥८०॥ [७८
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ।
N] तस्य सा शुशुभे छाया वितता लवणाम्भसि ॥८१॥ [८१

---

१. ब म—सहसा कपिः ।
२. कै ल$_1$, ल$_2$ ब म च—†॰गवातेन।
३. म च—‡ रोदसीं ।
४. कै रा ल$_1$, ल$_2$ ब म—
॰ काशानुद्धृतान् ।
५. कै रा ल$_1$, ल$_2$ ब म—
॰वेगसमुत्क्षिप्तं॰ । म—वेगे समुत्कृ॰ ।
६. म—अंबर॰ ।
७. कै रा ल$_1$, ल$_2$, ल$_2$ ब म श—
॰ मिवाननं ।
८. म म च—चारुतराम॰ ।
९. कै ल$_1$, ल$_2$ ब म श—
श्वेताभ्रा घनराजी॰ ।
१०. कै ल$_1$, ल$_2$ ब म श—
छाया च शुशुभे तस्य ।

शुशुभे स महातेजा महाकायो महाकपिः ।
N] [1]वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ॥[2]८२॥ [८२
यतः[3] स याति बलवान्वेगेन कपिकुञ्जरः[4]।
N] तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ८३ ॥ [८३
६१ ङ] आपाते पक्षिसंघानां पक्षिराज[5] इवाव्रजत् ।
N] हनुमान्मेघजालानि प्राकर्षन्मारुतो यथा ॥८४॥ [८४
पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ।
६२] कपिना कृष्यमाणानि महाभ्राणि[6] चकाशिरे ॥८५॥ [८५
[7]प्रविशन्नभ्रजालानि निपतंश्च पुनः पुनः ।
६३] प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥८६॥ [८६
प्लवमानं तु तं दृष्ट्वा समुद्रे प्लवगर्षभम् ।
N] मुमुचुः पुष्पवर्षाणि देवतास्तस्य मूर्धनि ॥८७॥ [८७
न तताप तदा सूर्यः प्रयातं वानरर्षभम् ।
N] सिषेवे[8] च सुखो वातो रामकार्यार्थसिद्धये ॥८८॥ [८८
ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसि ।
N] जगुश्च[9] देवगन्धर्वाः प्रशशंसुः प्लवङ्गमम् ॥ ८९ ॥ [८९
नागा यक्षाः सुपर्णाश्च रक्षांसि विबुधाः[10] खगाः ।
N] प्रेक्षकास्ते कपिवरं सहसा चोपचक्रमुः[11] ॥ ९० ॥ [९०
तस्मिन्प्लवगशार्दूले प्लवमाने विहायसि ।

---

१. म—वायुसर्गे ।
२. ल$_1$—नास्ति ।
३. कै रा ल$_1$,ल$_2$ब म श—येन स्म ।
४. ल$_1$—नास्ति ।
५. ब—पक्षिराजातं ।
६. रा अ म च—†महामाभ्राणि का० ।
७. कै रा अ ल$_1$, ल$_2$ ब म श—
प्राविशच्च० ।
८. म—‡ सिषेव ।
९. कै रा ल$_1$, ल$_2$ ब म श—
† जगुश्च ।
१०. रा श - विविधाः ।
११. अ म च—समुपचक्रमुः ।

स०७,१] इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥९१॥ [९१
साहाय्यं वानरेन्द्रस्य यद्यहं वै हनूमतः ।
२] करिष्यामि भविष्यामि न च वाच्यो विवक्षताम्॥९२॥ [९२
अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ।
३] ऐक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति ॥ ९३ ॥ [९३
तथा मया विधातव्यं विश्राम्येत यथा कपिः ।
४] शेषं च मयि विश्रान्तः सुखेनाधिगमिष्यति ॥९४॥ [९४
इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसा ।
५] हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ९५ ॥ [९५
त्वमिहासुरसङ्घानां पातालतलवासिनाम् ।
६] देवैरा(?जा)गिरिश्रेष्ठं प्रैतिघाः(?घाः)सन्निवेशितः९६[९६
त्वं शेषां ज्ञातवीर्याणां संमहीतलचारिणाम् ।
७] पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥९७॥ [९७
तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् ।
८] तस्मात्सन्देशयामि त्वामुत्तिष्ठ नगसत्तम ॥ ९८ ॥ [९८
य एष कपिशार्दूलो मामुपेष्यति वेगवान् ।
९] हनुमानाम कार्यार्थी भीमकर्मा खमाप्लुतः ॥ ९९ ॥ [९९
अस्य साह्यं मया देयमिक्ष्वाकुकुलवर्तिनः ।

---

१. अ भ च—इक्ष्वाकु० ।
२. कै रा ल$_1$, ल$_2$ व भ— † समुद्रस्य० ।
३. श—देवराजः ।
४. कै रा ल$_1$, ल$_2$ व भ श अ— गिरिश्रेष्ठः ।
५. कै रा ल$_2$ व—† प्रतिष्ठा । ल$_1$, भ —प्रतिष्ठा । श—†प्रतिष्ठः । अ—परिघः । च—† प्रतिष्ठ ।
६. श—† ज्ञातिवीर्या० । भ—† ज्ञातवीर्या० ।
७. ल$_1$,—पातालतलच० ।
८. कै ल$_1$, ल$_2$ व भ श—त्वामु० ।
९. ल$_2$—वीर्यवान् ।
१०. ल$_2$—हनूमान् ।

१०] मम हीक्ष्वाकवः पूज्याः परं पूज्यतमस्ततः ॥१००॥ [१००
कुरु साचिव्यमस्माकं न वो कालात्ययो भवेत् ।
११] कर्तव्यं ह्यकृतं कार्यं सतां मन्युमुदीरयेत् ॥१०१॥ [१०१
सलिलादूर्ध्वमुत्तिष्ठ विश्रमेत यथा कपिः ।
१२] अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः ॥१०२॥ [१०२
चामीकर इवाभाति देवगन्धर्वपूजितः ।
१३] हनुमांस्त्वयि विश्रान्तः पुनः शेषं प्रयास्यति॥१०३॥ [१०३पू
काकुत्स्थस्यानृशंसस्य मैथिल्याश्च विवासनम् ।
१४] श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥१०४॥ [१०४
हिरण्यनाभो मैनाको निशम्य लवणाम्भसः ।
१५] उत्पपात जलात्तूर्णं नानाद्रुमलतावृतः ॥ १०५ ॥ [१०५
स सागरजलं भित्त्वा बभूवाभ्युत्थितस्तदा ।
१७] यथा जलधरं भित्त्वा दीप्तरश्मिर् दिवाकरः ॥१०६॥ [१०६
स महात्मा मुहूर्तेन उत्थितः सलिलाश्रितः ।
N] दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥१०७॥ [१०७
शातकौम्भमयैः शृङ्गैः शुशुभे स महागिरिः ।

---

१. कै ल$_{2}$ ब श—वः ।
रा ल$_{1}$ म च—नः ।
२. श—हि कृतं ।
३. श—† मन्युमुदी० ।
४. कै रा ल$_{1}$ ल$_{2}$ ब म श—
०कमपि चैवेष ।
५. कै रा ल$_{1}$ ल$_{2}$ ब म श अ च—
हनुमांस्तव ।
६. रा अ म च—गमिष्यति ।
७. श—०श्योत्थातुम० ।
८. अ म च—० तावुवः ।
९. कै—
"यथा" इत्यारभ्य "सलिलाश्रितः"
इत्यन्तः पाठः प्रान्तेऽपरहस्तेन ।
ल$_{1}$ म श—नास्ति ।
१०. ल$_{2}$ ब—सलिलमुत्थितस्तदा ।
म—०तः सलिलावृतः ।
११. कै—शातकुम्भमयैः ।
१२. कै ल$_{1}$ ल$_{1}$ ब म श अ—
भ्राजमानैः स्वयंप्रभैः ।

१८] आदित्योदयसंकाशैश्छिन्नद्रिरिवाम्बरम् ॥१०८॥ [१०८
तस्य जाम्बूनदैः शृङ्गैः पर्वतस्य समुत्थितैः ।
१९] आकाशं शस्त्रसंकाशमभवत् काञ्चनप्रभम् ॥ [2]१०९ ॥ [१०९
जातरूपमयैः शृङ्गैर् भ्राजमानैः स्वयंप्रभैः । [3]
२०] आदित्यशतसंकाशः सोऽभवद्गिरिसत्तमः ॥११०॥ [११०
समुत्थितमसङ्गेन हनुमानग्रतः स्थितम् ।
२१] मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥१११॥ [१११
स तमुत्थितमत्यर्थं महावेगो महाकपिः ।
२२] उरसा पातयामास जीमूत इव मारुतिः ॥११२॥ [११२
स तदा पातितस्तेन कपिना पर्वतोत्तमः ।
२३] दृष्ट्वा तस्योरुवेगं च जहर्षे च ननर्द च ॥ ११३ ॥ [११३
स तमाकाशमभ्येत्य आकाशे च समुत्थितम् ।
२४] स्थितो हृष्टमना वाक्यमब्रवीत् पर्वतः कपिम् ॥११४॥ [११४पू
४७उ] हिरण्यनाभो नाम्नाहं काञ्चनः पर्वतः कपे ।
४८पू] [10]मयि विश्रम भद्रं ते त्वदर्थमहमुत्थितः ॥ ११५ ॥ [N
N] अब्रवीच्च[11] हनूमन्तं काञ्चनः पर्वतोत्तमः । [N

१. रा—आदित्यशतसं० ।
ल२ ब—आदित्यचयसं० ।
२. कै रा ल१,ल२,ब म ध्रा—नास्ति ।
३. ल१,ब म ध्रा अ च—हनूमान० ।
४. अ म च—० मिति मन्यते ।
५. अ म च—समुच्छ्रित० ।
६. कै रा ल१,ल२,अ म च—उरसा ।
७. अ म च—जहर्ष ।
८. ध्रा—ननर्द ।
९. कै रा ल१,ल२ ब म ध्रा अ च—पर्वतोत्तमः ।
१०. रा ल२ ब—
" मयि " इत्यारभ्य " पर्वतोत्तमः "
इत्यन्तः पाठो नास्ति ।
११. कै रा ल१,ल२,ब म ध्रा अ च—० हनुमतः ।
१२. म—अब्रवीत्तं ।

२५पू ] धारयन्मानुषं रूपं स्वे पर्वे शिखरे स्थितः ॥११६॥ [११४उ
२९उ ] दुष्करं कृतवान्कर्म त्वमिदं वानरोत्तम ।
३०पू ] निपत्य मम शृङ्गेषु विश्राम्य त्वं यथासुखम् ॥११७॥ [११५
२५ उ] राघवस्य कुले तात उदधिः परिवर्धितः ।
स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ॥११८॥ [११६
२६] कृते च प्रतिकर्तव्यमेषा तात सतां गतिः ।
यो'' यं प्रत्युपकारार्थी 'त्वं नः सम्मानमर्हसि॥११९॥[११७
२७] त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः ।
उत्तिष्ठ गिरिशार्दूल त्वयि विश्राम्यतु क्षणम् ॥१२०॥ [११८
२८] योजनानां शतं दूरं कपिरेष समाप्लुतः ।
२९पू ] तवैव सानुषु विश्रान्तस्ततः शेषं गमिष्यति ॥१२१॥ [११९
३०उ ] तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु ।
आस्वाद्यैतद्धरिश्रेष्ठ विश्रान्तोऽभिगमिष्यसि ॥१२२॥[१२०

---

१. कै रा ल$_1$,ल$_2$ब म श—रमस्व। भ—स्वमेव।
२. ल$_1$ ब म श भ—विश्रम। ल$_2$—‡ विश्रम्य।
३. कै रा ल$_1$,ल$_2$ब म श अ च—आतो।
४. कै रा ल$_1$, ल$_2$ म श च—मुदा वः। ब—सागरैः।
५. कै रा ल$_1$, ल$_2$ ब म श अ—परिवर्तितः।
६. ल$_1$ श च—† त्वं।
७. कै रा ल$_1$, ल$_2$ ब म श च—प्रत्यर्थयति। च—प्रत्यर्थयति।
८, कै रा ल$_1$, ल$_2$ ब श—हृत्येव।
९. कै रा ल$_1$, ल$_2$ म श च—परिकर्तव्यमेषां। ब—०व्यमेषां। अ म—प्रतिकर्तव्य०।
१०. म—सोऽयं।
११. अ म च—त्वमतः सम्मानमर्हसि।
१२. म—‡ विश्रम्य च।
१३. ल$_2$—‘ तव ’ इत्यारभ्य ‘ ०भि-गमिष्यसि’ इत्यन्तः पाठो नास्ति।
१४. ल$_1$ ब म श—बहुमं।
१५. म—
“ ०भिगमिष्यसि ” इत्यारभ्य “ ०परिग्रहः” इत्यन्तः पाठः—प्रान्तेऽपरहस्तेन।

११] अस्माकमभिसम्बन्धः कपिश्रेष्ठ महांस्त्वयि ।
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥१२३॥ [१२१

१२] वेगवन्तः प्लवन्ते ये प्लवगा मारुतात्मज ।
तेषां मुख्यतमं मन्ये त्वामहं कपिसत्तम ॥१२४॥ [१२२

१३] अतिथिः प्रतिपूजार्हः प्राकृतोपि विजानता ।
धर्मं जिज्ञासमानेन किम्पुनर्यादृशो भवान् ॥१२५॥ [१२३

१४] त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ।
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर । [१२४

१५] पूजिते त्वयि सर्वात्मा पूजां प्राप्नोति मारुतः ॥१२६॥ [१२५पू

१६व] एवमुक्तस्तु हनुमाँन्सुनाभेन महात्मना ।
अन्तरिक्षगतः श्रीमान्मारुतस्यात्मसम्भवः ॥१२७॥ [N

१७] स तं दृष्ट्वा महावीर्यं पर्वतं मेघभूषितम् ।
मणिरत्नाकरं दिव्यं सुनाभमिदमब्रवीत् ॥१२८॥ [N

१८] समुद्रस्याप्रमेयस्य महामकरसङ्कुले ।
किं त्वमन्तर्जले वीर विगाहे ब्रूहि कारणम् ॥१२९॥ [N

१९] एवमुक्तः शुभं वाक्यं सुनाभः पर्वतोत्तमः । [N
प्रत्युवाच हनूमन्तं शृणु चाप्यत्र कारणम्॥१३०॥ [१२५उ

---

१. रा छ$_2$ व म ब—०कमपि सं०
छ$_1$—पर्वतानामपि सं०।

२. छ$_2$—मध्यतमं ।
ख—० मध्यतमं ।

३. म श ब—अतिपूज्यार्हः ।

४. म—नास्ति ।

५. म—नास्ति ।

६. कै—+ पूजितं ।

७. म—हनूमान् । म—भगवान् ।

८. छ$_1$—नास्ति ।

९. कै रा छ$_1$,छ$_2$ व म श म ब-
महामकरकुंडले ।

१०. रा छ$_1$—नास्ति ।

४०] पुरा कृतयुगे तात पर्वताः पक्षिणोऽभवन् ।
ते व्रजन्ति दिशस्सर्वा गरुडानिलरंहसः ॥१३१॥ [१२६
४१] ततस्तेषु प्रयातेषु देवसङ्घा महर्षिभिः ।
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥१३२॥ [१२७
४२] ततः क्रुद्धः सहस्राक्षः पर्वतानां पुरन्दरः ।
पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः ॥१३३॥ [१२८
४३] स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् ।
ततोहं सहसा क्षिप्तः श्वसनेन महात्मना ॥१३४॥ [१२९
४४] अस्मिंल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम ।
४५पू] गुप्तः पक्षैस्समग्रैश्च तव पित्रास्मि रक्षितः । [१३०
४८उ] ततोहं मानयामि त्वां मान्यो हि मम मारुतः ॥१३५॥ [१३१पू
एवमस्मत्प्रियो बन्धुः कपिमुख्यो महागुणः ।
एष मे त्वयि संबन्धः कृतः कपिवरोत्तम ॥१३६॥ [१३१उ
४९] अस्मिन्नेव वै संबन्धे सागरस्य ममैव च ।
प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाबल ॥१३७॥ [१३२
५०] श्रमान्मोचय चात्मानं मान्यस्त्वं कपिकुञ्जर ।
प्रीतिं च बहुमन्यस्व प्रीतोस्मि तव दर्शने ॥१३८॥ [१३३
५१] एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ।
५२उ] प्रीतोस्मि कृतमातिथ्यं त्वया मे पर्वतोत्तम । [१३४

---

१. कै—पातनशंकया ।
रा—† पतनसंभ्रमया ।
२. म—वेग ।
३. कै रा—† प्लवगोत्तमः ।
४. ल१—कपिमुख्यो ।
५. म—महात्मनः ।
६. कै अ म—कपिवरोत्तमः ।
७. ल—तु संब० ।
अ म च—गते कार्ये ।
८. कै—महाबलः ।
९. कै ल१ च म श—कपिकुञ्जरः ।

त्वरे च त्वरिते कार्ये कालश्चाप्यतिवर्तते ॥१३९॥ [१३६पू
५३] क्रमिष्यता मयिका वै कृता च कपिसत्क्रिया ।
कर्तव्ये सागरस्यैव नान्तरा स्थेयमित्युत ॥१४०॥[1] [१३६उ
५४] नाहं स्थास्यामि वै तस्मात्त्वयि पर्वतसत्तम ।
संस्पृष्टोऽस्म्यहमङ्गुल्या माननीयो भवानिति ॥१४१॥ [N
५५] इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः ।
N] जगामाकाशमाविश्य वीर्यवान्वानरोत्तमः ॥१४२॥ [१३६
५६उ] स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ।
५७पू] पूजितश्चोपपन्नाभिराशीर्भिरनिलात्मजः । [१३७
N] द्विगुणं तु कृतोत्साहः सोऽम्बरं समगाहत ॥१४३॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे मैनाकदर्शनं नाम
एकषष्टितमः सर्गः ॥ ६१ ॥

---

१. कै—च कार्यकालो मा। ल$_1$, ल$_2$ च म श— च कार्यकालो मा०। रा—च कार्यकालो मा०। च—स्वकार्यकालो मा०।

२. कै—महश्चाप्यति०। ल$_1$,ल$_2$ च म श—महांश्चाप्यति०। रा च—०महश्चाप्यति०।

३. च ल$_1$—क्रमिष्यतः।

४. च ल$_1$—वत्तुके। च—वत्तके। ल$_2$—वत्तके। म—पर्वते।

५. कै ल$_1$ म श—नास्ति।

६. कै रा ल$_1$, ल$_2$ च म श स च— मानयन् भगवानिति।

७. म—नास्ति।

८. ल$_2$ च म श—किष्किन्धाका०।

९. म—मैनाकवाक्यं।

अथोर्ध्वं दूरमुत्क्रम्य हित्वा चलमहार्णवौ ।
N] पितुः पन्थानमास्थाय जगाम विमलेऽम्बरे[2] ॥१॥ [१३८
भूयश्चोर्ध्वगतिं प्राप्य गिरिं तमवलोकयन् । [१३९पू
N] जगामाकाशमाविश्य वेगेन गरुडो यथा ॥२॥ [N
वायुपुत्रो निरालम्बे जगाम विमलेऽम्बरे ॥३॥ [१३९उ
N] तद्द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
प्रशशंसुस्सुरास्सर्वे सिद्धाश्च परमर्षयः ॥४॥ [१४०
६६] देवताश्चाभवंस्तुष्टास्तत्रस्थास्तस्य कर्मणा ।
६७उ] काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः ॥५॥ [१४१उ
ईदं तु वचनं धीमान्परितोषस्य लक्षणम् ।
६८] सुनाभं पर्वतश्रेष्ठं स्वयमाह शचीपतिः ॥६॥ [१४२
हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम् ।
६९] अभयं ते प्रयच्छामि तिष्ठ सौम्य यथासुखम् ॥७॥[१४३
साह्यं कृतं ते सुमहद्विक्रान्तस्य हनूमतः ।
७०] क्रमतो योजनशतं निर्भयस्य भये सति ॥८॥ [१४४
रामकार्यार्थदूतस्य त्वया दाशरथेर्हरेः ।[1]
७१] सत्क्रियां कुर्वता शक्त्या तोषितोऽस्मि त्वया भृशम् ॥९॥ [१४५
ततः प्रहर्षमतुलं स लेभे पर्वतोत्तमः ।

---

१. अ च—०समासाद्य ।
म—०समाद्दाय ।
२. दा श्र—० ऽम्बरे ।
३. दा—० मास्थाय ।
४. छ₂—निरालम्बो ।
५. म—हनुमता कृतं ।
६. दै—काञ्चनस्य सुनाभस्य ।
म—काञ्चनस्य सुनाभस्य ।
छ₁—काञ्चनस्य सुरामस्य ।
७. म—च इदं ।
८. म—कथं ।
९. म—रामस्यैव हि दूत्येन यातो
दाशरथेः हरिः ।
१०. म—स्वं ।
११. म श्र—† त्वया ।

७२] देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ॥२०॥ [१४६
७१पू] सोपि दर्पवरश्शैलो बभूवावस्थितस्तदा । [७१पू
N] हनुमांश्च मुहूर्तेन व्यतिक्रम्य च सागरम् ॥२१॥ [१४७
सर्ग१] ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
२] अब्रुवन्सूर्यसङ्काशां सुरसां नागमातरम् ॥ २२ ॥ [१४८
अयं वातात्मजः श्रीमान्प्लवते सागरोपरि ।
३] हनुमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥२३॥ [१४९
राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ।
४] दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभः स्पृशत् ॥२४॥ [१५०
बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ।
५] किं करिष्यत्युपायं वा विषादं वा गमिष्यति ॥२५॥ [१५१
एवमुक्ता तु सा देवी दैवतैरभिसंस्कृता ।
६] समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ॥२६॥ [१५२
विकृतं च विरूपं च सर्वस्य च भयावहम् ।
७] प्लवमानं हनूमन्तमावृत्येदमुवाच हे ॥२७॥ [१५३
मत्स्यभूतः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ ।
८] अहं त्वा भक्षयिष्यामि प्रविशेदं ममाननम् ॥२८॥ [१५४

---

१. भ—स हि ।
२. भ—हनूमांश्च ।
३. ब म च—व्यतिचक्राम ।
४. कै रा भ ल$_1$, ब म ल$_2$ शा च—नाम मारुतं ।
५. ल$_1$—+ अथ ।
६. कै रा ल$_1$, ब म ल$_2$ शा—०समादाय ।
७. ल$_1$—०ोपमं ।
८. शा—इत्युक्ता सुरसा ।
९. कै रा ल$_1$, भ ब म ल$_2$ शा च—०तैरपि सत्कृता ।
१०. भ—राक्षसी ।
११. ल$_1$ ल$_2$—च ।
१२. कै रा ल$_1$, भ ल$_2$ म च—भक्षभूतः ।
१३. कै रा ल$_1$, भ ब ल$_2$ शा—०र्षभः ।

९] एवमुक्तः सुरसया प्राञ्जलिर्वाक्यमब्रवीत् [1] । [१५६
रामो दाशरथिर्नाम प्रविष्टो दण्डकं वनम् ।
१०] लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥१९॥ [१५७
जनस्थाननिमित्तं च बद्धवैरस्य राक्षसैः ।
११] तस्य भार्या हृता सीता रावणेन यशस्विनी ॥२०॥ [१५८
तस्याः सकाशे दूतोऽहं गच्छामि नृपशासनात् ॥२१॥
१२] सा त्वमर्हसि रामस्य साह्यं विषयवासिनी ॥२२॥ [१५९
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ।
१३] आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते [8] ॥२३॥ [१६०
एवमुक्ता हनुमता सुरसा कामरूपिणी ।
१४] अब्रवीन्नातिवर्तेत कश्चिद्वा वानरोत्तम ॥२४॥ [१६१
एवमुक्तस्सुरसया क्रुद्धो वानरपुङ्गवः ।
१५] अब्रवीत्कुरु वक्त्रं स्वं येन मां निगलिष्यसि ॥२५[11]॥ [१६४
इत्युक्ता सुरसा वक्त्रं चकार दशयोजनम् ।
१६] दशयोजनविस्तारो बभूव हनुमान्कपिः ॥२६[14]॥ [१६५

---

१. म—०लिर्वाक्यमेव च ।
२. म—अतः परमधिकः पाठः—
विषण्णवदनः श्रीमानिदं वचनमब्रवीत् ।
३. म—समीपं ।
४. छ$_3$—०शासनं ।
५. म—अर्हस्व ।
६. म—अथ तां ।
७. के ग छ$_1$, ब व म छ$_2$ श च—रामस्याक्लिष्टकर्मणः ।
८. च—। ०शृणोति मे ।
९. छ$_2$—०वीन्नाति० ।
श—०वीन्ना निव० ।
१०. के ब म छ$_2$—वानरोत्तमः ।
११. म—स्वं वक्त्रं येन मां निगलिष्यसि ।
१२. म—नास्ति ।
१३. छ$_1$—नास्ति ।
१४. म—स महाकपिः ।
च—हनुमानपि ।
१५. छ$_1$ मं—नास्ति ।

१७ ख] तं दृष्ट्वा मेघसङ्काशं दशयोजनमायतम् ।
१८] चकार सुरसा वक्त्रं विंशतिं योजनानि तु ॥[1]२७॥ [१६६
हनूमांश्च ततः क्रुद्धः त्रिंशद्योजन आयतः । [१६७
१९] चकार सुरसा वक्त्रं चत्वारिंशत्तथायतम् ।
बभूव हनुमान् क्रुद्धः पञ्चाशद्योजनोच्छ्रितः ॥२८॥ [१६८
२०] चकार सुरसा वक्त्रं षष्टियोजनमायतम् ।[2]
तथैव हनुमान्कुर्वन्सप्ततियोजनोच्छ्रितः ॥२९॥ [१६९
२१] चकार सुरसा वक्त्रमशीतियोजनायतम् [3]।
बभूव स गिरिप्रख्यो नवतियोजनोच्छ्रितः ॥३०॥ [१७०
२२पू] चकार सुरसा वक्त्रं शतयोजनमायतम् ॥[4]३१॥ [१७१
[5]] तं दृष्ट्वा व्यादितं वक्त्रं शतयोजनमायतम् [6]।
दीप्तजिह्वं सुरसया तं घोरं नरकोपमम् ॥३२॥ [१७२पू
२४] स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः ।
तस्मिन्मुहूर्ते हनुमान्बभूवाङ्गुष्ठमात्रकः ॥३३॥ [१७२ख
२५] सोऽभिपत्याशु तद्वक्त्रं निष्क्रम्यास्यान्महाजवः ।
अन्तरिक्षे स्थितः श्रीमान्सुरसामिदमब्रवीत् ॥३४॥ [१७३
२६] प्रविष्टोऽहं च ते वक्त्रं दाक्षायणि नमोऽस्तु ते ।

---

१. म—[ ] त्रिंशद्योजन० ।
म—०जनमुच्छ्रितं ।
२. के रा $ख_1$, ज ब म $ख_2$ झा च—नास्ति ।
३. रा ज ब $ख_2$ झा—०जनविस्तृतं।
४. म—नास्ति ।
५. झ—०मास्थितः सागरे ।
६. के रा $ख_1$, ज ब म $ख_2$ झा च—नास्ति ।
७. म—नास्ति ।
८. $ख_1$—०जनविस्तृतं ।
९. म—नास्ति ।
१०. के $ख_1$, म ब च—महोरग० ।
म—तं घोरं नर० ।
११. $ख_1$—[ ]० जीमूत ।
१२. रा—श्रीमानिदं वचनम्० ।

गमिष्ये यत्र वैदेही सत्यं चास्तु वचस्तव ॥३५॥ [१७४
२७] तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ।
अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ॥३६॥ [१७५
२८] अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
२९पू] समानय च वैदेहीं राघवस्य महात्मनः ॥३७॥ [१७६
तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
२९ उ] साधु साध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥३८॥ [१७७
स सागरमनाधृष्यं मध्येनं वरुणालयम् ।
स६,१] जगामाकाशमाविश्य वेगेन गरुडो यथा ॥३९॥ [१७८
स७,५८उ] सेवितं वारिधाराभिः पतगैश्च निषेवितम् ।
चरितं कौशिकाचार्यैर्मारुतैरुपवीजितम् ॥४०॥ [१७९
५९] सिंह-शार्दूल-गरुडैस्तुरगोरग-वारणैः ।
६०पू] विमानैः संपतद्भिश्च विविधैस्समलंकृतम् ॥ ४१ ॥ [१८०
६४ उ] वज्राशनिनिपातैश्च पावकैरुपशोभितम् ।

---

१. रा—सत्यमपि।
ळ$_2$—सत्यमस्तु।
२. म—वचो यथा।
३. अ म च—†राघवेण महात्मना।
४. कै रा ळ$_1$ व म ळ$_2$ श च—मध्ये स।
५. म—अत आरभ्य ४७ समस्य पूर्वार्धं यावत् सर्वाणि सेवितमित्ये-तत्समानसम्बन्धानि पदानि सप्तम्ये-कवचने पठितानि। तद् यथा—सेविते निषेविते। चरिते।
६. म—पतंगैश्च।
७. ळ$_1$—०तैरुपशोभितं।
व म श—०तैरुपवीजितं।
८. रा ळ$_2$ व म श—०वार्णैः।
म—०गवारणे।
९. ळ$_1$—नास्ति।
१०. म—०निपातानलैः।
११. ळ$_1$ नास्ति।
म—अतः परमधिकः पाठः—
शोभते देवसंघानां देवराज इव स्वयम्।

कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरलंकृतम् ॥४२॥ [१८१
६२] वहता हव्यमत्यर्थं सेवितं चित्रभानुना ।
६० उ] ग्रहचन्द्रार्कनक्षत्र-तारागणविराजितम् ॥४३॥ [१८२
६१पू] महर्षिगण-गन्धर्व-नाग-यक्ष-समाकुलम् ।
N] विविक्तं विमलं दिव्यं विश्वावसुनिषेवितम् ॥४४॥ [१८३
५८ उ] सेवितं वारिधाराभिर्भुजगैश्च निषेवितम् ॥४५॥ [N
देवराजगजाक्रान्तं सूर्यचन्द्रोपशोभितम् ।
N] वितर्तं जीवलोकस्य वितानं ब्रह्मनिर्मितम् ॥४६॥ [१८४
बहुभिस्सेवितं वीरैः विद्याधरगणैर्वरैः ।
N] हनुमान्मेघजालानि प्राकर्षन्मारुतो यथा ॥४७॥ [१८६
गुरूणि सर्ववर्णानि रक्तपीतासितानि च ।
६३] कपिनाकृष्यमाणानि महाभ्राणि चकाशिरे ॥४८॥ [१८७
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
६५] प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥४९॥ [१८८
सर्ग ८] प्लवमानं ततस्तं तु सिंहिका प्रेक्ष्य वानरम् ।
१] मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥५०॥ [१९०
सुदीर्घस्याथ कालस्य भविष्याम्यहमाशिता ।

---

१. के म श रा—समाच्छन्नि॰ ।
रा श्र म च—स्वर्गजिद्भि॰ ।
ज—स्वर्गजिद्भिरलंकृते ।
२. म—ग्रहनक्षत्रचन्द्रार्कतारा॰ ।
३. के रा ल१ श्र च म ल२ श च—मानवद्भि॰ ।
४. म—सेवे ।
५. नास्ति ।
६. के रा ल१ श्र च म ल२ श च—॰परिरक्षितम् ।
७. के रा श्र च म ल२—विततं ब्र॰ ;
म—विताने ब्र॰ ।
ल१ श्र—विततम॰ ।
८. ल१—॰न्याचचजा॰ ।
९. म—कालागुरुसव॰ ।
१०. के श—†कपिराकृ॰ ।
११. रा ल२—†॰ माशिता ।
म—॰न्यातिवर्तिता ।

२] इदं हि मे महद्भूतं चिरस्य वशमागतम् ॥५१॥ [१९१
इति सञ्चिन्त्य सा तस्य छायामाशु समाक्षिपत् ।
३] छायायां संगृहीतायां चिन्तयामास वानरः ॥५२॥ [१९२
समाक्षिप्तोऽस्मि सहसा निरुद्ध इव पर्वतः ।
४] प्रतिलोमेन वातेन महापोत इवार्णवे ॥५३॥ [१९३
तिर्यगूर्ध्वमधश्चापि वीक्ष(ईक्ष)माणस्ततस्ततः ।
५] ददर्श स महत्सत्त्वमद्भुतं लवणाम्भसि ॥५४॥ [१९४
कपिराज्ञा (ईज्ञा) समाख्यातं यत्सत्त्वं सुमहोदधौ ।
६] छायाग्राहि महावीर्यं तदिदं नात्र संशयः ॥५५॥ [१९५
स तां बुध्वार्थं तत्त्वेन सिंहिकां कपिकुञ्जरः [9]।
७] प्रावर्धत महाकायः प्रावृषीव बलाहकः ॥५६॥ [१९६
तस्याथ कायमुद्वीक्ष्य वर्धमानं महाकपेः [10]।
८] वक्त्रं विवर्धयामास पातालाम्बरसंस्थितम् ॥५७॥ [१९७
स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् ।
९] कपिगात्राणि संक्षिप्य मर्माणि च महाकपिः ॥५८॥ [१९९

---

१. ल$_1$—संचिंतमानस्य ।
श—संचिंत्यमानस्य ।
म—संचिंत्य मनसा ।
२. कै—‡०चामाक्षिपक्षिपती ।
ल$_1$ म—‡०चामम्बुमाक्षिपत् ।
ल$_2$—†०चामम्बुमाक्षिपत् ।
श—†०चामचमा० ।
म—†०चां वशमाक्षिप० ।
३. ल$_1$—समाक्षिप्तोऽस्मि ।
४. म—०स्ततः कपिः ।
५. रा—च । ल$_1$ म ल$_2$ म—सु ।
६. कै रा ल$_1$ च म ल$_2$ श—तत्सत्त्वं ।
७. कै रा ल$_1$ च म ल$_2$ श म—बुद्ध्वार्थं० ।
८. म—अतः परमधिकः पाठः—
इति निश्चित्य तत्त्वेन सिंहिकां मतिमान् कपिः ।
९. म च—व्यवर्धत ।
१०. म—†०हाकपिः ।
११. म—व्यवर्धतास्यं ।
च—‡व्यवर्धयामास ।
१२. कै रा ल$_1$ म च म ल$_2$ म च—कायवन्मानि ।

सितदंष्ट्रे मुखे तस्मिन्स पपात महाजवः[1] । [२००
१०] आस्ये तस्या निमज्जन्तं ददृशुस्ते नभश्चराः ।
N] ग्रस्यमानं[2] यथा चन्द्रं पूर्णपर्वणि[3] राहुणा[4] ॥४९॥ [२०१
११पू ] ततस्तस्या नखैस्तीक्ष्णैः मर्माण्युत्कृत्य[5] वानरः ।
N] अन्त्राण्यपादाय सर्वाणि वेगेन[6] निःसृतो मुखात् ॥५०॥ [२०२पू
११ उ] उत्पपाताथ वेगेन शूरो मारुतवत्कपिः ॥५१॥ [२०२उ
N] सापतन्निहता तेन भिन्ने हृदयबन्धने । [२०४पू
N] अभ्यर्चपदमन्वर्थमेतद्वाक्यमुवाच[7] ह ॥५२॥ [N
यस्य ह्येतानि[8] चत्वारि वानरेन्द्र यथा तव ।
१९] धृतिर्धार्ष्ट्यं[9] बलं दाक्ष्यं स कर्मसु न सीदति ॥५३॥[२०७
११ उ] निहता सा हनुमता न्यपतल्लवणाम्भसि । [N
N] स्वयंभुवैव हनुमान्सृष्टस्तस्या निषूदकः[10] ॥५४॥ [२०४उ
निहतां वानरेन्द्रेण पतितां[11] वीक्ष्य सिंहिकाम् ।
१५] भूतान्याकाशचारीणि तमूचुः प्लवगर्षभम् ॥५५॥ [२०५
१६पू ] महद्वीर्यं[12] कृतं कर्म महत्सत्त्वं त्वया हतम् ।
१८ उ] साधयार्थमभिप्रेतमरिष्टं[13] प्लवतां वर ॥५६॥ [२०६
चतुर्थं कर्म तद्दृष्ट्वा दुष्करं कृतमोजसा ।

---

१. अ म च—महाबलः ।
२. कै रा ङ$_1$ च ङ$_2$ ग्र—ग्रस्यमानं० ।
३. ङ$_1$—पूर्वे पर्वणि ।
अ—पूर्णे पर्वणि ।
४. रा—हनुना ।
५. कै ङ$_1$ ङ$_2$—मर्माण्याकृत्य ।
६. म—०वेगाच्च्युतो ।
७. रा—अभ्यर्चयद्० ।
म—०पदमनर्थं सा च वाक्यमु० ।
८. म—ह्येतानि ।
९. म—[illegible] ।
१०. म—निपातकः ।
११. म—सेवितां ।
१२. म च—श्रीमतश्च ।
१३. म—०प्रेतं स्वस्त्यस्तु च वानरौ ।
च म ग्र—०रिष्टं प्लवतांवर ।

N] सेन्द्राः सर्षिगणाश्चैव देवतां स्समपूजयन् ॥६७॥ [N
स तैस्समाजितः प्राज्ञः प्रपक्षैः शतयोजनम् ।
२०] जगाम पुनराकाशं पन्नगाशनवत्कपिः ॥६८॥ [२०८
प्राप्तभूयिष्ठपारस्स सर्वतः प्रविलोकयन् ।
२२] योजनानां शतस्यान्ते वनराजीन्ददर्श सः ॥६९॥ [२०९
साळान्प्रियकताळांश्च चम्पकान्सहरिद्र (? द्रु) कान् ।
N] चूताम्नीपान्नागपुष्पान्धवाश्वत्थांश्च किंशुकान् ॥७०॥ [N
तिन्दुकांश्चन्दनाञ्जम्बून् पनसान्बिल्वपाटळान् ।
N] कदम्बान्सप्तपर्णांश्च खर्जूरककुभान्वटान् ॥७१॥ [N
बन्धूकांस्तिळकान्फुल्लानशोकानर्जुनानपि । [N
N] स ददर्शापतन्नेवं विविधद्रुमशोभितम् ॥७२॥
द्वीपं शाखामृगश्रेष्ठस्त्रिकूटोपवनानि च । [२१०
सागरं सागरानूपे सागरानूपजान्द्रुमान् ।
N] सागरस्य च पत्नीनां मुखान्यभिविलोकयन् ॥७३॥ [२११
समुद्रतीरेषु तथा सूक्ष्मकाञ्चनवालुकाः

---

१. रा ळ१ म ब म ळ२ श च— [illegible]० ।
२. श—।देवता स० ।
३. म—। प्रपक्षैः ।
४. म—।०[illegible]। म—०[illegible]
५. श म—[illegible] ।
६. म च— [illegible] ।
७. के रा ळ१ व श—।[illegible] ।
८. के रा ळ१ ळ२ श म—[illegible] ।
९. के रा ळ१ ब श च-[illegible]० । अ म ळ२ च—[illegible]० ।
१०. श—।० [illegible] ।
११. के ळ१ अ च—।[illegible]० ।
१२. के रा ळ१ ब म ळ२ श— ०[illegible] ।
१३. म च — ०रानूपं ।
१४. म—०[illegible]० ।
१५. म—नास्ति ।

N] दृष्टिरम्याणि पश्यन्स चिन्तयामास वानरः ॥७४॥ [N
२३ ब] स महामेघसंकाशं समीक्ष्यात्मानमात्मना ।
विनिरुद्धमिवाकाशं चकार मतिमान्मतिम् ॥७५॥ [२१२
२४] कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः ।
२५पू] अतिकौतूहलं कुर्युरिति मेने स वानरः ॥७६॥ [२१३
ततः शरीरं संक्षिप्य स महीधरसंनिभम् ।
N] पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥७७॥ [२१४
ततः शरीरमत्यर्थं संक्षिप्य च सुसंवृतम्[८] ।
२५ उ] हरिः प्रकृतिमापेदे हरिर्विक्रान्तवानिव ॥७८॥ [२१५
स चारुनानाविधरूपधारी(री)
पारं समासाद्य समुद्रतीरम् ।
परैरशक्यप्रतिपन्नरूपः
N] समीक्षितात्मा समवी(वे)क्षितार्थः ॥७९॥ [२१६
ततः सुवेलस्य गिरेः प्रवीरे[१२]
महद्ध्रकूटस्य पपात कूटे[१३] ।
स केतकीचम्पकनालिकेरे[१४]

---

१. के रा ळ$_1$ अ ब म ळ$_2$ श च—विरूपांतमि० ।
२. रा—दृष्ट्वैव ।
३. म—अधिवासि समावृतं ।
४. ब—देव... । त्रुटितः पाठः ।
५. म—मात्मि ।
६. रा अ ब म च—कपिः । म—पुनः ।
७. म—विमुर्वि० ।
८. च—०चलमधारी पा० ।
९. रा ळ$_1$ अ ब—०पन्नरूप० ।
१०. अ म—०तात्मानमवेक्षि० ।
११. अ—सुवेलस्य ।
१२. म—समीपे ।
१३. म—कूटे ।
१४. के रा ळ$_1$ ब ळ$_2$ श—केतकीचम्पक० । म च—केतकोद्दालक० ।
१५. के ळ$_1$ म—नारिकेले । रा अ ब ळ$_2$ श—नालिकेरे ।

२१] महाभ्रकूटप्रतिमो महात्मा ॥८०॥ [२१

ततः शरीरं बडवामुखाभं
संक्षिप्य वीरो गिरिसन्निकाशम् ।

कपिस्तु तस्मिन्निपपात पर्वते

N] विधूय रूपं व्यथयन्मृगद्विजान् ॥८१॥[२१८ख

ततस्तु सम्भाप्य समुद्रतीरं
समीक्ष्य लङ्कागिरिमम्बुदाभम् । [२१८पू

कपिस्तु तस्मिन्विचचार शैले

N] रामस्य पादौ मनसा प्रणम्य ॥८२॥ [N

स सागरं दानवपन्नगायुतं
बलेन विक्रम्य महोर्मिमालिनम् ।

निपत्य पारं स महोदधेस्तदा

N] ददर्श लङ्काममरावतीं यथा ॥८३॥ [२१९

इत्यार्षे रामायणे किष्किन्धाकाण्डे महर्षिवाल्मीकिकृतौ सागरलङ्घनं नाम
द्विषष्टितमः सर्गः ॥ ६२ ॥

---

समाप्तश्चेदं किष्किन्धाकाण्डम् ।

---

१. ङ$_1$—०कूटप्रतिमे ।
म—हेमे महाभ्रप्रतिमो ।

२. म—ततस्तु संप्राप्य समुद्रतीरं
समीक्ष्य लंकां गिरिणाभिरामं (मां)

३. व ङ$_2$ श—०न्धाकाण्डे ।
म—चतुर्विंशतिसाहस्त्र्यां संहितायां
किष्किन्धाकाण्डं समाप्तं ।

४. च—०(किचिरपि)षे ।
म—नास्ति ।

५. के रा ङ$_2$ म श च—०लङ्घनं नाम सर्गः ।
म—नास्ति ।

# १—व्यक्तिविशेषनाम-संग्रहः ।

## २-देशविशेषनाम-संग्रहः ।

## ३–पुरनाम-संग्रहः ।



## ४–पर्वतनाम-संग्रहः ।

## ५—वनोपवननाम-संग्रहः ।



## ६—नदनद्यादिनाम-संग्रहः ।

# ७–लतावृक्षादिनाम-संग्रहः ।

## ८–पशुपक्ष्यादिप्राणिनाम-संग्रहः ।

## ९—युद्धोपकरणनाम-संग्रहः ।



## १०—शब्दविशेषनाम संग्रहः ।

## अलङ्कृतपद्यांशसंग्रहः।

शक्रचापनिभे चापे गृह्य देवाविवा-
गतौ ( रामलक्ष्मणौ )–२, १२.
सिंहस्कन्धौ महासत्त्वौ समदौ
वृषभाविव ( रामलक्ष्मणौ )—
२ १२.
केनचित् कार्ययोगेन एकदेहौ
द्विधा कृतौ। लक्षणाकारसंपन्नाव-
श्विनाविव रूपिणौ। २, १६.
जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव
पन्नगैः ( बाणैः ) २, १९.
बद्धावेतौ प्रकाशेते निर्मुक्तौ भुज-
गाविव। २, २०.
निवासाय महातेजाः प्रभयेव
दिवाकरः। ( रामः सीतयानुगतः )
३, ९.
लोकनाथो महुर्घन्तः सुग्रीवं
नाथमृच्छति। सर्वलोकशरण्यो-
ऽसौ शरणं चाभिकाङ्क्षति॥
३, १७.
( सुग्रीवः ) भयं वालिसमुद्भूतं
भुक्तं शाल्यमिवात्यजत्। ४, ७.
उवाच वचनं प्रीतः प्रीतिपूर्वं
कृताञ्जलिः। ४, ८.
संप्रहृष्टमनाः पाणिं पीडयामास
पाणिना। ४, १२.
स्फुरन्ती रावणस्याङ्के पन्नगेन्द्र-
वधूरिव (सीता)। ४, २६.
अभवद्बाष्पसंरुद्धो नीहारेणेव
चन्द्रमाः (रामः)। ४, ३१.
विनिश्वसन् महासर्पो बिलस्थ
इव कोपितः (रामः) ४, ३३.
स मज्जत्यवशः शोके भाराक्रान्तेव
नौर्जले। ५, ५.
निश्चला भवति प्रीतिर्धैर्यमात्म-
वतामिव(त्वद्विधानां कृतात्मनाम्)
६, ३.
लक्ष्मणस्याग्रजो लक्ष्म्या निवा-
सस्य च धीमतः। ६, ८.
धर्मज्ञो धर्मवत्सलः (रामः) ६,१७.
सरोषा इव पन्नगाः(शराः) ६,२०.
रणे विनिहतं भूमौ विकीर्णमिव
पर्वतम् (वालिनम्)। ६, २१.
त्वं दहेः कुपितो लोकान् युगान्ते
रश्मिवानिव (रामः) ६, २३.
वर्धते हृदयोत्कम्पी प्रावृण्वेग
इवाम्भसे (अमर्षः) ७, १६.
पूर्णचन्द्रसमप्रभम्(छत्रम्) ७,४७.
हिमवन्तमथागच्छच्छरभ्रमाणा-
दिव च्युतः ( असुरः) ८, ९.
गजेन्द्रविपुलाः शिलाः ८, १०.
स दास्यति महावीर्यः ( वाली
दुन्दुभेः ) । द्वन्द्वयुद्धं महाघोरं
नमुचेरिव वासवः। ८, १७.
धारयन् माहिषं रूपं तीक्ष्णशृङ्गो

भयावहः। प्रावृषेण्यो यथा मेघस्तोय-
पूर्णो नभस्तले (दुन्दुभिः)। ८,२०.
दुन्दुभिर्दुन्दुभिस्वनः ८, २१.
विषाणैरुल्लिखन् दर्पात् तद्द्वारं
जलदो यथा ( दुन्दुभिः ) । ८, २३.
निष्पपात वृतः स्त्रीभिः ताराभिरिव
चन्द्रमाः ( वाली ) । ८, २३.
इमे ते विपुला सालाः सप्त शाखा-
विलम्बिनः । यत्रैषा यतते वाली
निष्पत्रयितुमोजसा ॥ ८, ४३
सुग्रीवः प्रणतग्रीवः । ८, ६०.
सुग्रीवो हेमपिङ्गलः । ८, ७६.
विनैर्भिन्दन्निवाम्बरम्
(सुग्रीवः व्यनदत् )। ८, ७७
निष्पपात गृहाद् वाली भास्करो
ऽभ्रगणादिव । ८, ७७.
तयोः सुतुमुलं युद्धं वालिसुग्री-
वयोरभूत्। गगने ग्रहयोर्घोरं बुधा-
ङ्गारकयोरिव ॥ ८, ७.
अन्योन्यसदृशौ वीरौ सक्तौ
वीराविवाश्विनौ (वालिसुग्रीवौ )
८, ८०.
लक्ष्मणो ( सुरराडिव ) गज-
पुष्पीं तां तस्य कण्ठे ससञ्ज ह ।
८, ९७.
( सुग्रीवः ) शुशुभे वीरो मालया
कण्ठसक्तया । मालयेव बलाकानां
ससन्ध्यस्तोयदो यथा । ८, ९८.
अयं घन इवाकाशे वृक्षषण्डः
प्रकाशते ९, १२.
द्रुम-प्राकारसंवृतः (आश्रमः) ९, १८.
चेष्टन्तीव च वृक्षाग्राः कपोताङ्गा-
रुणध्वजाः । ९, २१.
नादैर्भिन्दन्निवाम्बरम् ( सुग्रीवो
व्यनदत् ) ९, २८.
( प्रतिज्ञां ) सफलां कुरु लतां
काल इवागतः । ९, ३१.
कृताभिज्ञानचिह्नस्त्वमनया गज-
मालया । विपरीत इवाकाशे सूर्यो
नक्षत्रमालया ॥ ९, ३३.
सफलां च करिष्यामि प्रतिज्ञां
जहि संभ्रमम् । प्रसूतं कलमं क्षेत्रे
वर्षेणेव शतक्रतुः ॥ ९, ३५.
वालिनो हेममालिनः । ९, ४०.
नादैर्भिन्दन्निवाम्बरम् । ( सुग्रीवो
ननाद ) ९, ४३.
( वानर्यः ) कुलस्त्रिय इवाकुलाः ।
९, ४४.
मग्ना इव रणे हयाः । (मृगाः) ९,४५.
क्षीणपुण्या इव ग्रहाः । ( खगाः )
९, ४५.
सूर्यात्मजः शौर्यविवृद्धतेजाः
सरित्पतिः पर्वणि चञ्चलोर्मिः ।
९, ४६.

मदश्चैकपदे नष्टः क्रोधेनाधिष्ठितोऽभवत् ( वाली ) । १०, २.

स हि रोषपरीताङ्गो वाली सन्ध्यातपप्रभः । १०, ३.

उपरक्त इवादित्यः।(वाली)१०, ३.

वाली दंष्ट्राकरालस्तु क्रोधदीप्ताग्निसप्रभः । भातिस्म पतितैः पत्रैः समृणाल इवाम्बुजः। १०, ४.

वेगेन चरणन्यासैः कम्पयन्निव मेदिनीम् । ( वाली निष्पपात ) १०, ५.

नदीवेगमिवागतम् । ( क्रोधम् ) १०, ७.

शयनादुत्थितः क्रोधं त्यज भुक्तामिव स्रजम् । १०, ८.

युगान्ताग्निरिवोत्थितः । ( रामः ) १०, १५.

धातूनामिव कैलासो गुणानामाकरो महान् ( रामः ) । १०, १७.

भवनस्थः स वनस्थो वा सर्वथा बन्धुरेव सः । (सुग्रीवः) १०, २२.

युगान्तादित्यवर्चसा । ( रामेण ) ११, ३.

अग्निसमस्पर्शैः । ( सायकैः ) ११, १३.

न विष्यथेऽहं तस्माच्च सुग्रीवप्रतिसंहतात् । शायिष्ये तव्रतो वाऽहं शाययिष्यामि वाथ तम् । ११, १४.

तारासहशद्ध्वेनाम् ।(तारां)१२,१.

चकार रुदती मन्दं दक्षिणा सा ऽप्रदक्षिणम् । १२, १०.

महासर्प इव श्वसन् ( वाली ) ११, ११.

दीप्यमानमिवानलम् ( सुग्रीवम् )। १२, १३.

सोऽभवच्छोणितोद्गारी सधातुरिव पर्वतः (वाली ) । १२, २०.

उरुभारसमाक्रान्तो नौ सार्थ इव सागरे ( वाली ) । १२, २२.

युगान्ताग्निरिव ज्वलन् । ( वाली ) १२, २३.

सुपर्णसमवेगिनौ ( वालिसुग्रीवौ ) १२, २४.

प्रयुद्धौ घोररूपौ तौ बुधयुक्काविवाम्बरे(वालिसुग्रीवौ) ।१२,२४.

तडाग इव पीताम्बुरुपशोषं गमिष्यति । ( अङ्गदः ) १२, ३२.

महेन्द्रमिव दुर्धर्षं महेन्द्रमिव दुस्सहम् । महेन्द्रसुतं निहतं वालिनं रणदुर्मदम् ॥ १३, १.

ययातिमिव पुण्यान्ते देवलोकात् परिच्युतम् । आदित्यमिव कालेन युगान्ते विनिपातितम् ( वालिनम् ) १३, ३.

